THE

# KASHI-SANSKRIT-SERIES

( *HARIDAS SANSKRIT GRANTHAMĀLĀ* )



## NO. 68.

( Lexicography Section, No. 2 )

The

# Anekārtha Saṅgraha

Of

## ĀCHĀRYA HEMA CHANDRA

*Edited*

With an Alphabatical Index Prepared by

CHANĀNANDA PĀṆḌEYA AND JANĀRDANA JOSHI

By

*Jagannāth Śastri Hoshing Sāhityopādhyāya.*



PRINTED, PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office, Vidya Vilas Press,*

*North of Gopalmandir, Benares City.*

1929.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares,*

Agents:
1 Otto Harrassowitz, Leipzig:
GERMANY.
2 Arthur Probsthain,
Oriental & Foreign Bookseller,
London.
3 The Oriental Book-supplying Agency,
POONA.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

६८

कोशविभागे(२)द्वितीयं पुष्पम् ।

# अनेकार्थसङ्ग्रहो नाम कोशः

आचार्यश्रीहेमचन्द्रेण विरचितः ।

श्रीपण्डित घनानन्दपाण्डेयेन पल्लवग्रामवासिना तथा
श्रीपण्डित जनार्दनज्योतिर्विदा तारादत्तिना
चीनाखनीवासिना च कूर्माचलपर्वतीयाभ्याम्
उद्धृत्य संशोध्याऽकारादिसूच्या संवेष्ट्य मुद्रणायाऽर्पितः ।

श्रीमता पण्डितजगन्नाथशास्त्रिहोशिङ्गमहोदयेन
साहित्योपाध्यायेन सम्पादितः ।

प्रकाशकः—
जयकृष्णदास—हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

इस कार्यालय द्वारा इस सूचीपत्र के अलावा ४ संस्कृत ग्रन्थमालायें यथा "चौखम्बासंस्कृतसीरिज़" "काशीसंस्कृतसीरिज़" "बनारससंस्कृतसीरिज़" तथा "हरिदाससंस्कृतसीरिज़" ग्रन्थमालायें भी निकलती हैं, सूचीपत्र पृथक् मंगवाकर देखने की कृपा करें। इन सब सूचीपत्रों में छपे ग्रन्थों के अलावा भारतवर्ष के सभी प्रकाशकों के प्रकाशित ग्रन्थ भी विक्रयार्थ प्रस्तुत रहते हैं, इसके अलावा इस प्रेस द्वारा सर्व प्रकार की संस्कृत, हिन्दी, अंग्रेजी की सुन्दर छपाई होती है, परीक्षा प्रार्थनीय है।

पत्रादि प्रेषणस्थानम्—

**जयकृष्णदास हरिदास गुप्तः—**

**चौखम्बासंस्कृतसीरिज़ आफिस, विद्याविलासप्रेस,**

**गोपालमन्दिर के उत्तर फाटक, बनारस सिटी।**

॥ श्रीः ॥

# भूमिका।

अथैष मुद्रापयित्वा प्राकाश्यं नीयते श्रीहेमचन्द्रार्यविनिर्मितः अनेकार्थसङ्ग्रहो नाम कोशः। अस्मिन् किल २००० द्विसहस्रमिताः श्लोकाः सन्ति। एकाद्वित्रिचतुःपञ्च-षट्स्वराणामेनकार्थानां शब्दानां सङ्ग्रहेण काण्डनाम्ना षोढा विभक्तोऽयं ग्रन्थः। अन्ते च तेनैव क्रमेण 'अव्यय'वर्गोऽपि सङ्गृहीतोऽस्ति। तत्राप्याधुनिकानामिवाऽकारादिक्रमेण शब्दसङ्ग्रहणं रचयित्रा सौकर्याय विहितम्। एतस्य निर्माणात्प्रागेवाऽमुना एकार्थ-शब्दसङ्ग्रहात्मकः कोशो निर्मित एवाऽऽसीदिति ग्रन्थारम्भे "ध्यात्वाऽर्हतः कृतैकार्थशब्द-सन्दोहसङ्ग्रहः" इत्याद्युपन्यासेनाऽवगन्तुं शक्यते। शब्देष्वादावकारादिरन्ते च कका-रादिः पूर्वमुद्देश्यवचनमनन्तरं च तदर्थप्रकाशनामिति क्रमः सर्वत्राऽत्र पुस्तके जाग-र्तीति तथैव प्रतिज्ञाऽप्यस्य। मुद्रितस्य प्रकृतग्रन्थस्यैतत्कृता टीकापि 'अनेकार्थकैरवा-करकौमुदी' नाम्ना विद्यते। यद्विषये इदमपि कथ्यते यत् सा टीका तच्छिष्येण महेन्द्रेण* विरच्य तन्नाम्नैव प्रतिष्ठापिता।

साम्प्रतं संस्कृतवाण्यां कियन्तः के च कोशाः समुपलभ्यन्त इत्येतं विषयं 'गायक-वाड-ओरियंटल-सिरीज-नामकग्रन्थमालायाः ४२ संख्यायां मुद्रितस्य साहित्याचार्य एम्. ए. इत्याद्युपाधिधारिभिः पण्डितप्रकाण्डैः पाण्डेयश्रीरामावतारशर्मभिः सम्पादितस्य केशवकृतकल्पद्रुकोशस्य राजकीयाऽऽङ्ग्लभाषानिबद्धात् कोशपरिचायकात् प्रास्ताविका-दुपाददीत विद्वद्वर्ग इति तत्र मौनमेव समालम्ब्यते। परं ग्रन्थकर्तृविषये किञ्चिदुपन्य-सनमप्रासङ्गिकं न स्यादित्यधस्तात् प्रदर्श्यते—

यद्यपि 'प्रभावकचरिता'दिग्रन्थेषु तत्र तत्रोपलभ्यते प्रकृतग्रन्थकर्तुर्जीवनचरित-विषये वर्णनं, तथापि यत्किञ्चिदितस्ततः प्राप्तमेवाऽस्माभिरुल्लिख्यते। आचार्यश्रीहेमचन्द्र-स्तु जैन आसीदित्यत्र तु न केषामपि विप्रतिपत्तिः। एष हि जयसिंहकुमारपालाभिधयो-र्नृपयोराश्रये निवसति स्मेति स्थितिकालोऽस्य ११४५-१२३२ वैक्रमीयद्वादशशताब्दि-मध्यकालात् त्रयोदशशताब्दीपूर्वार्धभागं यावत् प्रायो निर्णीयते मर्मस्पृग्भिरितिहासज्ञैः। "कलिकालसर्वज्ञ" इति नामान्तरमप्यस्य प्रथितमेवाऽऽसीत्। एतदुपज्ञेषु ग्रन्थे-ष्वद्यावधि ज्ञाता ग्रन्थास्त्विमे—१ अभिधानचिन्तामणिः सवृत्तिः, २ अनेकार्थसङ्ग्रहः सवृत्तिः, ३ निघण्टुशेषः, ४ सवृत्तिका देशीनाममालेति चत्वारः कोशग्रन्थाः। अन्ये च ५ काव्यानुशासनम्, ६ अलङ्कारचूडामणिः, ७ छन्दोऽनुशासनं, ८ द्याश्रयं काव्यं, ९ धातुपाठः सवृत्तिः, १० धातुपारायणं सवृत्ति, ११ धातुमाला, १२ नाममाला, १३ नाममालाशेषः, १४ सवृत्तिः प्रमाणमीमांसा, १५ बलाबलसूत्रबृहद्वृत्तिः १६ बाल-भाषाव्याकरणसूत्रवृत्तिः, १७ उणादिसूत्रवृत्तिः, १८ लिङ्गानुशासनं सवृत्ति, १९ शब्दानु-शासनं सवृत्ति २० योगसूत्रम्, २१ विभ्रमसूत्रम्, २२ त्रिषष्टिशलाकापुरुषचरित्रं सपरिशिष्टपर्व २३ शेषसङ्ग्रहः, २४ सारोद्धारश्चेति।

एतत्सम्बन्धिन्यः काश्चन कथा अपि प्रसिद्धाः। तत्रत्यैवैकेयम्--कदाचिद्राज्ञः कुमार-

---

*श्रीहेमसूरिशिष्येण श्रीमन्महेन्द्रसूरिणा।

पालस्य पुरस्तात् केनचित् वार्ताप्रसङ्गेणाऽगादि यत् श्वेताम्बरजैनाः प्रत्यक्षमपि देवं सवितारं नाऽभ्युपयन्तीति। तदा हेमचन्द्र उदतरयत्–आः कथं नाऽभ्युपयन्ति। यतः–'अधाम धामधामैव वयमेव हृदि स्थितम्। यस्याऽस्तव्यसने प्राप्ते त्यजामो भोजनोदके'॥ इति।

एकदा देवपूजकैरुपेत्य समुद्रोपकण्ठे वर्तमानस्य सोमनाथमहादेव-शिवालयस्य पुनरुद्धाराय प्रार्थितं, राज्ञाऽपि समाज्ञप्तम्। ततः क्रमशस्तत्र समुपस्थिते विघ्ने तन्निवारणाय हेमचन्द्रप्रदर्शितदिशैव व्रतमनुष्ठाय समवसिते मन्दिरजीर्णोद्धारकर्मणि सहैवाऽमुना हेमचन्द्रेण तत्र राज्ञाऽगम्यत समार्च्यत च स शिवः। तदवसरे कविनाऽमुनेत्थं तस्य स्तुतिरपि गीता। यथा–

भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य।
ब्रह्मा वा विष्णुर्वा हरो वा जिनो वा नमस्तस्मै॥ १॥
यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया।
वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते॥ २॥
त्रैलोक्यं सकलं त्रिकालविषयं सालोकमलोकितं
साक्षाद्येन यथा स्वयं करतले रेखात्रयं साङ्गुलि।
रागद्वेषभयामयान्तकजरालोलत्वलोभादयो
नालं यत्पदलङ्घनाय स महादेवो मया वन्द्यते॥ ३॥
यो विश्वं वेद वेद्यं जननजलनिधेर्भङ्गिनः पारदृश्वा
पौर्वापर्याविरुद्धं वचनमनुपमं निष्कलङ्कं यदीयम्।
तं वन्दे साधुवन्द्यं सकलगुणनिधिं ध्वस्तदोषद्विषन्तं
बुद्धं वा वर्धमानं शतदलनिलयं केशवं वा शिवं वा॥ ४॥ इति

एवमेव बह्व्यः आख्यायिका एतत्सम्बन्धेनोपस्थापयितुं शक्यन्ते, परमत्र तदपहायाऽखिलं मुख्योंऽशः प्रादर्शि।

एतत्पुस्तकं संशोध्य प्रकाशनायाऽहं श्रीमता जयकृष्णदासमहोदयेनाऽभ्यर्थितः। श्रीमज्जनार्दनज्योतिर्विद्भिरेव मुद्रणार्हं विधाय पुस्तकं प्रहितमासीत्। एतस्य पुस्तकस्य प्रकाशनविषये विद्याभूषणश्रीकृष्णज्योतिर्विद् बी. ए. एल्. एल्. बी., श्रीपद्मादत्तपाण्डेयः एम्. ए., श्रीभैरवदत्तपाण्डेयो वैदिकः, श्रीघनानन्दपाण्डेयः कूर्माचलीयः, तारादत्तिः श्रीजनार्दनज्योतिर्वित्, चौखम्भासंस्कृतपुस्तकमालाध्यक्षः श्रेष्ठिश्रीजयकृष्णदासमहोदयश्चेत्येते धन्यवादार्हाः।

साक्षात् पुस्तकादिसाहाय्यदानेन ये महाभागा मामुपकृतवन्तस्ते माननीयाः श्रीगोपीनाथकविराज एम्.ए.(प्रिंसिपल् गवर्नमेंट संस्कृत कालेज काशी) महोदयाः, सतीर्थ्याः श्रीबटुकनाथशर्माणः एम्. ए. साहित्याचार्याः हिन्दूविश्वविद्यालये संस्कृताध्यापकाः तथा ज्योतिर्विदो मान्याः श्रीश्रीनाथशास्त्रिवेतालमहोदया अपि कथमिव न स्मृतिमेष्यन्तीति तेषां स्मृत्वा, येषां श्रीमतां पूज्यपादानां गुरुवर्याणां कृपाकटाक्षकणिकालाभेन किमपि कर्तुं प्रभवामस्तान् सनमनं सम्पूज्य विरम्यते वृथापल्लवितादस्मादिति शिवम्।

वाराणसी
दत्तजयन्ती सं० १९८५

विदुषां स्वभहाजनम्–
जगन्नाथशास्त्री होशिङ्गः

# उपोद्घातः ।



श्री अनेकार्थ-सङ्ग्रहो नाम कोशः श्रीमता हेमचन्द्रेण प्रतिभाशालिना कवीश्वरेण निरमायि। बहवोऽन्ये च ग्रन्थास्तेन महाभागेन लिखितास्तेषु न खलु सर्वे प्रचलितास्तथापि काव्यानुशासनं लिङ्गानुशासनं शब्दानुशासनं छन्दोऽनुशासनं वादानुशासनं योगशास्त्रम् इत्येते चान्येऽपि कतिचिन्निबन्धा लोके विद्वद्भिरादृताः प्रचारमलभन्त। सार्द्धत्रय-कोटि-मित-श्लोकरचनात्मिकाऽभूच्छ्रीमतो हेमचन्द्रकवेर्लेखमालेति प्रसिद्धिस्तु महदाश्चर्यमुत्पादयत्येव। नायमतिप्राचीनः कविर्न चास्य जीवनचरितं दुर्ज्ञेयम् । यतः कवि-रयं जैनधर्मावलम्बी बभूव। श्रीवैक्रमीयेऽब्दे ११४५ भूतवेदेशमिते महाकार्तिक्यां पौर्णमास्यामजायत। पञ्चाशीतिवर्षमितमभूदस्य जीवनं, तच्च सकलं कविजीवनं प्रभावकचरितादिग्रन्थेषु पूर्णतयोपलभ्यते नातः पिष्टपेषणं विधीयते । गुर्जरदेशीयस्य राज्ञः श्रीमतः कुमारपालस्याऽस्मिन् सभासदि कोविदे विशेषोऽनुग्रहः स्नेहः प्रसादश्चाऽभवदिति कवेर्ग्रन्थानां प्रचारपरिचायको हेतुरिति बोद्धुं शक्यते। 'कलिकालसर्वज्ञ' इत्यप्यासीदभिधानमस्य कवेः।

वेदानारभ्य समग्रसाहित्यसमुदयस्य रक्षार्थं वित्तकोषानामिव शब्दकोषानामपि रक्षाकरणार्थकामेनेति मया कथञ्चित् महता काठिन्येन विश्वप्रकाश-त्रिकाण्डशेष-मेदिनी-शाश्वत-मङ्ख-वैजयन्ती-हारावल्यभिधानचिन्तामणिप्रभृतीनां कोषाणां सङ्ग्रहः कृतः। दुष्प्रापग्रन्थानां पुनरुद्धारे सहायकानां धन्यवादः क्रियते। अनेकार्थसङ्ग्रहः सम्प्रति लोके प्रचारशैथिल्येन अकालमत्ययमुपयातीत्यहमस्य रक्षणे परिकरं बध्नामि स्म। एकं हस्तलिखितं प्राचीनं जीर्णप्रायं पुस्तकमधिगत्य मया श्रीमतो हेमचन्द्रकवेर्गुणगौरवेण प्रचोदितेन तस्य सर्वेषां ग्रन्थानामुद्धरणे यत्नः कृतः । प्रथमं तावदनेकार्थसङ्ग्रहस्य द्वि-स्वरदान्तमात्रपाठं सम्प्राप्याऽहमितस्ततः पत्रप्रेषणादिषु बहु व्ययमङ्गीकृत्य प्रोफेसरथियोडोर जाचारीति नाम्ना जर्मनदेशीयेन विदुषा सम्पादितं पुस्तकं क्रीतवान्, किन्तु तत्पुस्तकं च प्रायशोऽपूर्णं बहुषु स्थलेषु न्यूनाशुद्धपाठसंवलितमासीत्। अत एव यतस्ततः पाठसंशोधनं कृत्वा अन्येभ्यः कोशेभ्यश्चोद्धृत्य विविधासु काव्यादिटीकासु धृतानि च कोशप्रमाणानि ततः पाठसंशोधनं स्वीकृत्य च कथञ्चिदिदं यावच्छक्यं सर्वाङ्गसुन्दरीकृतं पुस्तकं विद्वद्भ्यः

समर्पयामि । साम्प्रतं लोके प्रथितोऽमरकोशो वरीवर्ति, किन्तु हैमानेकार्थसङ्ग्रहकोषे शब्दानामाधिक्यं वर्तते, अस्य कोषस्य टीकायां तदानन्तिनानां प्राचीनप्रमाणभूतकोशानां वाक्यान्युद्धृतानि । तेषु च व्याडिनामधेयः कश्चित्कोषोऽपीदानीमस्माभिरन्विष्यते, यदि प्राप्स्यते तदा सोऽप्युद्धरिष्यते ।

कार्येऽस्मिन् सहायकेषु प्राधान्येन श्रीमान् श्रीकृष्णज्योतिर्विद् विद्याभूषण बी. ए. एल्. एल्. बीत्युपाधिमान् प्राड्विवाकः सम्प्रति काशीविश्वविद्यालये धर्मशिक्षासम्बन्धि-व्याख्यातृपदवीमवलम्बमानः, ततः श्रीमान् पण्डितः पद्मादत्तपाण्डेयः एम. ए. नयनी-तालीयहम्फ्रीपाठशालाध्यापकः, तथा श्रीमान् पण्डित भैरवदत्तपाण्डेयो वैदिको नूतनसंस्कारदशकर्मपद्धतिसङ्ग्राहकः, ततोऽपि विशेषतरं सभ्रातृको जयकृष्णदासमहोदयोऽध्यक्षश्चतुः-स्तम्भसंस्कृतमालायाः सन्तः सन्ति मम धन्यवादार्हाः ।

पदे पदे स्खलितानि सन्त्येव चलतां, विज्ञाः कृपयाऽशुद्धस्थलं संशोध्याऽस्मदुत्साहं वर्द्धयन्तु ।

नयनीतालनगरात्
सं० १९८४ माघशुक्ला ५

भवदीयौ—
जनार्दन ज्योतिर्वित् तारादत्तिः
घनानन्द पाण्डेयः कूर्माचलीयश्च

श्रीः ।

आचार्यश्रीहेमचन्द्रनिर्मितः—

# अनेकार्थसङ्ग्रहः ।

ध्यात्वाऽर्हतः[1] कृतैकार्थशब्दसन्दोहसङ्ग्रहः ।
एकस्वरादिषट्काण्ड्यां[2] कुर्वेऽनेकार्थसङ्ग्रहम् ॥ १ ॥
अकारादिक्रमोऽत्रादौ[3] ककारादिक्रमोऽन्ततः ।
उद्देश्यवचनं पूर्वं पश्चादर्थप्रकाशनम् ॥ २ ॥
यत्रैक एव रूढोऽर्थो यौगिकस्तत्र दर्श्यते ।
अनेकस्मिंस्तु रूढेऽर्थे यौगिकः प्रोच्यते न वा ॥ ३ ॥
पदानां भागतो[4] योऽस्मिन्ननेकार्थः प्रकाश्यते ।
प्रदर्शनीयो नैवासौ[5] तस्यानन्त्यप्रसङ्गतः ॥ ४ ॥
को ब्रह्मण्यात्मनि रवौ मयूरेऽग्नौ यमेऽनिले ।
कं शीर्षेऽम्बु सुखे, खं स्वसंविदि व्योमनीन्द्रिये ॥ ५ ॥
शून्ये बिन्दौ सुखे, खस्तु सूर्ये, गौरुदके दृशि ।
स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौ गिरि ॥ ६ ॥
त्वग् वल्कले चर्मणि च न्यग् निम्ने नीचकात्स्न्र्ययोः ।
रुक् शोभाकिरणेच्छासु वाग् भारत्यां वचस्यपि ॥ ७ ॥
जो जन्यां जातमात्रे च मृत्युञ्जये जनार्दने ।
जूराकाशे सरस्वत्यां पिशाच्यां जवनेऽपि च ॥ ८ ॥
ज्ञः स्याद्विचक्षणे पद्मासने चान्द्रमसायने ।
ष्ठा[6] जटायां च राक्षस्यां पतने दुर्भगास्त्रियाम् ॥ ९ ॥

---

१ नत्वा हरिं । २ काण्डात् । ३ क्रमेणादौ ।
४ भङ्ग । ५ प्रदर्शन्येनैवासौ । ६ वराहस्यां ।

सद् विद्यमाने सत्ये च प्रशस्ताऽर्चितसाधुषु ।
भः शुक्रे भमुडौ भांशौ भूस्तु भूमिरिव क्षितौ ॥ १० ॥
स्थाने च मः पुनः शम्भौ मा लक्ष्म्यां वारणेऽव्ययम् ।
किं क्षेपनिन्दयोः प्रश्ने वितर्के, ज्या तु मातरि ॥ ११ ॥
क्ष्मामौर्व्यो, र्द्युर्दिने वह्नौ द्यौस्तु स्वर्गे विहायसि ।
रस्तीक्ष्णे दहने, रास्तु सुवर्णे जलदे धने ॥ १२ ॥
ध्रूः कामरूपिणि स्वर्णे धूर्यानमुखभारयोः ।
पूः शरीरे नगर्यां च श्रीर्लक्ष्म्यां सरलद्रुमे ॥ १३ ॥
वेषोपकरणे वेषरचनायां मतौ गिरि ।
शोभात्रिवर्गसम्पत्त्योः स्रूः स्रुवे निर्झरेऽपि च ॥ १४ ॥
वः पश्चिमदिगीशे स्याद् वौपम्ये पुनरव्ययम् ।
स्वः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे धने ॥१५॥
दृग्दृष्टौ दर्शनेऽध्यक्षे विट् प्रवेशे नृवैश्ययोः ।
तृट् तृष्णावत्तर्षवच्च भवेल्लिप्सापिपासयोः ॥ १६ ॥
त्विट् शोभायां जिगीषायां व्यवसाये रुचौ गिरि ।
भाः प्रभावे मयूखे च मास्तु मासे निशाकरे ॥ १७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितेऽनेकार्थसङ्ग्रहे
एकस्वरकाण्डः प्रथमः ॥

अर्को द्रुभेदे स्फटिके ताम्रे सूर्ये बिडौजसि ।
अकं दुःखाघयोरङ्को भूषारूपकलक्ष्मसु ॥ १ ॥
चित्राजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः ।
एकोऽन्यः केवलः श्रेष्ठः संख्या, कल्कोऽघविष्ठयोः ॥ २ ॥
दम्भे पापिनि किट्टे च कङ्को ब्राह्मणलिङ्गिनि ।
लोहपृष्ठे यमे कर्कः श्वेताश्वे दर्पणे घटे ॥ ३ ॥
कर्केतनेऽश्मौ राशौ च काकः स्यात्पीठसर्पिणि ।
द्वीपमानद्रुभेदेषु शिरोऽवक्षालने द्विके ॥ ४ ॥

काकं काकसमूहे स्याद्रतबन्धे च योषिताम् ।
काका तु काकजङ्घायां काकोलीकाकनासयोः ॥ ५ ॥
काकोदुम्बरिकाकाकमाचिकारक्तिकास्वपि ।
किष्कुः प्रकोष्ठे हस्ते च वितस्तौ कुत्सितेऽपि च ॥ ६ ॥
कोको वृके चक्रवाके खर्जूरीद्रुमभेकयोः ।
छेको विदग्धे विश्वस्तमृगनीडजयोरपि ॥ ७ ॥
टङ्को नीलकपित्थेऽसिकोशे कोपेऽश्मदारणे ।
मानान्तरे खनित्रे च जङ्घायां टङ्कणेऽपि च ॥ ८ ॥
तर्को वितर्के काङ्क्षायामूहवर्त्मविशेषयोः ।
त्रिका कूपस्य नेमौ स्यात् त्रिकं पृष्ठाधरे त्रये ॥ ९ ॥
ताकं सन्तानसुतयोर्द्रिकः स्यात्काककाकयोः ।
न्यङ्कुर्मृगे मुनौ, नाकः स्वः खे, नाकुस्तु पर्वते ॥ १० ॥
मुनिवल्मीकयोर्निष्कः कर्षे हेमनि तत्पले ।
दीनारे साष्टसुवर्णशते वक्षोविभूषणे ॥ ११ ॥
पङ्कोऽघे कर्दमे, पाकः पचने शिशुदैत्ययोः ।
बको रक्षोभिदि श्रीदे शिवमल्लीबकोटयोः ॥ १२ ॥
भूकश्छिद्रं काले, भेको मेघमण्डूकभीरुषु ।
मुष्को मोक्षद्रुमे सङ्घे तस्करे मांसलाऽण्डयोः ॥ १३ ॥
मूको दैत्याऽवाग्दीनेषु रङ्कः कृपणमन्दयोः ।
राका कच्छ्वां दृष्टरजःकन्यायां सरिदन्तरे ॥ १४ ॥
पूर्णेन्दुपूर्णिमायां च रेकः शङ्काविरेकयोः ।
हीनेऽपि, रोकं क्रयणभेदे नावि बिले चरे ॥ १५ ॥
रोकोऽशौ, लङ्का तु शाखा शाकिनी कुलटा पुरी ।
लोको विश्वे जने, वल्कं शकले त्वचि शल्कवत् ॥ १६ ॥
वङ्कः पर्याणभागे स्यान्नदीपात्रे च भङ्गुरे ।
शको देशे राजभेदे शङ्का स्यात्संशये भये ॥ १७ ॥
शङ्कुः पत्रशिराजाले सङ्ख्याकीलकशम्भुषु ।
यादोऽस्त्रभेदयोर्मेढ्रे शाको द्वीपे नृपे द्रुमे ॥ १८ ॥

शक्तौ हरितके वाऽपि शुको व्यासजकीरयोः ।
रक्षोऽमात्ये शुकं ग्रन्थिपर्णेऽरलुशिरीषयोः १९ ॥
शुल्कं घट्टादिदातव्ये जामातुश्चापि बन्धके ।
शूकोऽनुक्रोशकिंशार्वोः शोके भिषवशुङ्गयोः ॥ २० ॥
शूका हृल्लेखे, श्लोकस्तु पद्यबन्धे यशस्यपि ।
शौकं शुकानां समूहे स्त्रीणां च करणान्तरे ॥ २१ ॥
सृका बाणोत्पलावाताः स्तोकः स्याच्चातकाऽल्पयोः ।

इति द्विस्वरकान्ताः ।

नखं तु गन्धद्रव्ये स्यान्नखः करजषण्ढयोः ॥ २२ ॥
न्युङ्खः सामविशेषस्य षडोङ्कार्यामतिप्रिये ।
पुङ्खः स्यान्मङ्गलाचारे शराङ्गश्येनयोरपि ॥ २३ ॥
प्रेङ्खा पर्यटने नृत्ये दोलायां वाजिनां गतौ ।
मुखमुपाये प्रारम्भे श्रेष्ठे निःसरणास्ययोः ॥ २४ ॥
रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि ।
लेखो लेख्ये दैवते च लेखा राज्यां लिपावपि ॥ २५ ॥
वीङ्खा तु शूकाशिम्बायां गतिभेदे च नर्तने ।
शङ्खः कम्बौ निधिभेदे स्यान्नख्यामलिकास्थनि ॥ २६ ॥
शाखा द्रुमांशे वेदांसे भुजे पक्षान्तरेऽन्तिके ।
शिखाग्रमात्रे चूडायां केकिचूडाप्रधानयोः ॥ २७ ॥
ज्वालायां लाङ्गलिकायां शिफाशाखाघृणिष्वपि ।
सखा सहाये मित्रे च सुखं त्रिदिवशर्मणोः ॥ २८ ॥
सुखा प्रचेतसः पुर्याम्

इति द्विस्वरखान्ताः ।

अगः स्यान्नगवत्तरौ ।
शैले सरीसृपे भाना,वङ्गमान्तिकगात्रयोः ॥ २९ ॥
उपसर्जनभूते स्यादभ्युपायप्रतीकयोः ।
अङ्गा नीवृद्विशेषाः स्युरिङ्गः स्यादिङ्गितेऽद्भुते ॥ ३० ॥
ज्ञानजङ्गमयोश्चापि खगोऽर्कग्रहपक्षिषु ।

शरे देवेऽपि खड्गोऽसौ खड्गी भृङ्गे च गण्डके ॥ ३१ ॥
गर्गो मुनिविशेषे स्याद्वृषे किञ्चुलुकेऽपि च ।
टङ्कः खनित्रे जङ्घास्योस्त्यागो वर्जनदानयोः ॥ ३२ ॥
तुङ्गः पुंनागनगयोर्बुधे स्यादुन्नतेऽन्यवत् ।
तुङ्गी प्रोक्ता हरिद्रायां बर्बरायामपीष्यते ॥ ३३ ॥
दुर्गो कोटे दुर्गमे स्याद् दुर्गा तु नीलकोमयोः ।
नागो मतङ्गजे सर्पे पुंनागे नागकेसरे ॥ ३४ ॥
क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च ।
देहानिलविशेषे च श्रेष्ठे स्यादुत्तरस्थितः ॥ ३५ ॥
नागं रङ्गे सीसपत्रे स्त्रीबन्धे करणान्तरे ।
पिङ्गी शम्यां, पिङ्गा हिङ्गुनाड्योर्गोरोचनोमयोः ॥ ३६ ॥
पिङ्गं बालके पिशङ्गे पूगः क्रमुकसङ्घयोः ।
फल्गुः काकोदुम्बरिकावृक्षे निरर्थकेऽपि च ॥ ३७ ॥
भगोऽर्कज्ञानमाहात्म्ययशोवैराग्यमुक्तिषु ।
रूपवीर्यप्रयत्नेच्छाश्रीधर्मैश्वर्ययोनिषु ॥ ३८ ॥
भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये ।
कौटिल्ये भयविच्छित्योर्भङ्गा शणे भङ्गिः पुनः ॥३९॥
भक्तिवीच्योर्भागो रूपार्धके भाग्यैकदेशयोः ।
भृङ्गं त्वक्पत्रं भृङ्गास्तु पिङ्गधूम्याटमार्कवाः ॥ ४० ॥
षट्पदोऽथ भृगुः सानौ जमदग्निप्रपातयोः ।
शुक्रे रुद्रे च भोगस्तु राज्ये वेश्याभृतौ सुखे ॥ ४१ ॥
धनेऽहिकायफणयोः पालनाभ्यवहारयोः ।
मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि ॥ ४२ ॥
मृगः कुरङ्गे याच्ञायां मृगयायां गजान्तरे ।
पशौ नक्षत्रभेदे च मृगी तु वनितान्तरे ॥ ४३ ॥
युगं हस्तचतुष्के तु रथाद्यङ्गे कृतादिके ।
वृद्धिनामौषधे युग्मे, यागो विस्रब्धघातिनि ॥ ४४ ॥
अलब्धलाभे सङ्गत्यां कार्मणध्यानयुक्तिषु ।

वपुः स्थैर्यप्रयोगे च संनाहे भेषजे घने ॥ ४५ ॥
विष्कंभादावुपाये च रङ्गः स्यान्नृत्ययुध्भुवोः ।
रागे च रङ्गं त्रपुणि रागः स्याल्लोहितादिषु ॥ ४६ ॥
गान्धारादौ क्लेशादिकेऽनुरागे मत्सरे नृपे ।
लङ्गः सङ्गे च षिड्गे च लिङ्गं मेहनचिन्हयोः ॥ ४७ ॥
शिवमूर्तावनुमाने सांख्योक्तप्रकृतावपि ।
वङ्गः कार्पासे वृन्ताके वङ्गा जनपदान्तरे ॥ ४८ ॥
वङ्गं त्रपुणि सीसे च वल्गुश्छागमनोज्ञयोः ।
व्यङ्गो भेके च हीनाङ्गे वेगो रयप्रवाहयोः ॥ ४९ ॥
रेतःकिंपाकयोश्चापि शार्ङ्गं विष्णुधनुर्धनुः ।
शुङ्गाम्राते वटे प्लक्षे शृङ्गं चिन्हविषाणयोः ॥ ५० ॥
क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वोत्कर्षसानुषु ।
शृङ्गः कूर्चशीर्षे शृङ्गी स्वर्णमीनविशेषयोः ॥ ५१ ॥
विषायामृषभौषध्यां सर्गस्त्यागस्वभावयोः ।
उत्साहे निश्चयेऽध्याये मोहानुमतिसृष्टिषु ॥ ५२ ॥
इति द्विस्वरगान्ताः ।
अर्घः पूजाविधा मूल्येऽघं दुःखे व्यसनैनसोः ।
उद्घो हस्तपुटे वह्नौ श्लाघायां देहजानिले ॥ ५३ ॥
ओघः प्रवाहसंघातो द्रुतनृत्तं परम्परा ।
उपदेशश्च, मेघस्तु मुस्तके जलदेऽपि च ॥ ५४ ॥
मोघो दीने निष्फले च मोघा स्यात्पाटलातरौ ।
लघुः स्पृक्का लध्वसारहस्वचार्वगुरुद्रुताः ॥ ५५ ॥
श्लाघोऽपास्तीच्छयोः स्तोत्रे—
इति द्विस्वरघान्ताः ।
ऽर्चा पूजा प्रतिमाऽपि च ।
कचः शुष्कव्रणे केशे बन्धे पुत्रे च गीष्पतेः ॥ ५६ ॥
कचा करेण्वां काचोऽक्षिरोगे शिक्ये मणौ मृदि ।
काञ्ची गुञ्जामेखलयोः पुर्यां, कूर्चो विकत्थने ॥ ५७ ॥

श्मश्रुणि दम्भे भ्रूमध्ये कूर्चो द्वीपे खगे गिरौ ।
चर्चा स्याच्चर्ममुण्डायां चिन्तास्थासकयोरपि ॥ ५८ ॥
चञ्चुः पञ्चाङ्गुले त्रोट्यां नीचः पामरखर्वयोः ।
मोचा शाल्मलिकदल्योर्मोचः शिग्रौ रुचिर्द्युतौ ॥ ५९ ॥
स्पृहाऽभिष्वङ्गशोभासु, वचः शुके, वचौषधौ ।
शारिकायां, वीच्याल्यूर्म्योरवकाशे सुखाल्पयोः ॥ ६० ॥
शचीन्द्राणीशतावर्योः शुचिः शुद्धे सितेऽनले ।
ग्रीष्माषाढानुपहतेषूपधाशुद्धमन्त्रिणि ॥ ६१ ॥
शृङ्गारे सूच्यभिनये व्यधने करणे स्त्रियाः ।

इति द्विस्वरचान्ताः ।

अच्छो भल्लूके स्फटिकेऽमलेऽच्छोऽभिमुखेऽव्ययम् ॥६२॥
कच्छो द्रुभेदे नौकाङ्गेऽनूपप्राये तटेऽपि च ।
कच्छास्तु देशे कच्छा स्यात्परिधानापराञ्चले ॥ ६३ ॥
चीर्यां वाराह्यां च गुच्छो गुच्छं हारकलापयोः ।
पिच्छः पुच्छे पिच्छं वाजे पिच्छा शाल्मलिवेष्टके ॥ ६४ ॥
पङ्क्तिपूगच्छटाकोशमण्डेष्वश्वपदामये ।
मोचायां पिच्छिले म्लेच्छो जातिभेदेऽपभाषणे ॥ ६५ ॥

इति द्विस्वरछान्ताः ।

अजश्छागे हरे विष्णौ रघुजे वेधसि स्मरे ।
अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मसंख्ययोः ॥ ६६ ॥
आजिः क्षणे समक्ष्मायां युध्यूर्जः कार्तिके बले ।
कञ्जो वेधसि केशे च कञ्जं पीयूषपद्मयोः ॥ ६७ ॥
कुञ्जो हनौ दन्तिदन्ते निकुञ्जे च कुजो द्रुमे ।
आरे नरकदैत्ये च कुब्जो न्युब्जद्रुभेदयोः ॥ ६८ ॥
खजा दर्वीमथोः खर्जूः खर्जूरीकीटकण्डुषु ।
गजो मतङ्गजे माने स्थानभेदेऽपि वास्तुनः ॥ ६९ ॥
गञ्जो भाण्डागारे रौढाखन्योर्गञ्जा सुरागृहे ।
गुञ्जा तु कृष्णलायां स्यात्पटहे मधुरध्वनौ ॥ ७० ॥

द्विजो विप्रक्षत्रिययोर्वैश्ये दन्ते विहङ्गमे ।
द्विजा भार्गीरेणुकयोर्ध्वजः पूर्वदिशो गृहे ॥ ७१ ॥
शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च ।
निजो नित्ये स्वकीये च न्युब्जः कुब्जे कुशस्रुचि ॥ ७२ ॥
अधोमुखेऽपि च न्युब्जं कर्मरङ्गतरोः फले ।
प्रजा लोके सन्ततौ च पिञ्जा तूलहरिद्रयोः ॥ ७३ ॥
पिञ्जो व्यग्रे वधे, पिञ्जं बले, बीजं तु रेतसि ।
स्यादाधाने च तत्त्वे च हेतावङ्कुरकारणे ॥ ७४ ॥
भुजो बाहौ करे भर्जूः शुद्धौ च रजकेऽपि च ।
राजी रेखायां पङ्क्तौ च रुजा त्वामयभङ्गयोः ॥ ७५ ॥
लञ्जः पदे च कच्छे च लाजः स्यादार्द्रतण्डुले ।
लाजास्तु भृष्टधान्ये स्युर्लाजं पुनरुशीरके ॥ ७६ ॥
व्रजोऽध्वगोष्ठसङ्घाते वणिग्वाणिज्यजीविनि ।
वाणिज्ये करणभेदे वाजं सर्पिषि वारिणि ॥ ७७ ॥
यज्ञान्ने, वाजस्तु पक्षे मुनौ निस्वनवेगयोः ।
व्याजः शाठ्येऽपदेशे च सज्जौ संनद्धसंभृतौ ॥ ७८ ॥
स्वजः प्रस्वेदे पुत्रे च सर्जूर्वाणिजि विद्युति ।
सज्जौ ब्रह्मशिवौ

इति द्विस्वरजान्ताः ।

प्रज्ञः प्राज्ञे प्रज्ञा तु धिषणा ॥ ७९ ॥
यज्ञः स्यादात्मनि मखे नारायणहुताशयोः ।
संज्ञा नामनि गायत्र्यां हस्ताद्यैरर्थसूचने ॥ ८० ॥
चेतनाऽर्कस्त्रियोः

इति द्विस्वरञान्ताः ।

अट्टो हट्टाऽट्टालकयोर्भृशे ।
चतुष्कभक्तयोरिष्टमीप्सिते क्रतुकर्मणि ॥ ८१ ॥
पुण्ये प्रेयसि संस्कारयोगेऽथेष्टिर्मखेच्छयोः ।
सङ्ग्रहश्लोकेऽथ कटो गजगण्डे कटौ भृशे ॥ ८२ ॥

शवे शवरथौषध्योः क्रियाकारश्मशानयोः ।
किलिञ्जे समये चापि कष्टं गहनकृच्छ्रयोः ॥ ८३ ॥
कट्वकार्ये मत्सरे च दूषणे च कटू रसे ।
तिक्ते प्रियङ्गुसुरभिकटुकाराजिकास्वपि ॥ ८४ ॥
कुटः कोटे शिलाकुट्टे घटे गेहे कुटी सुरा ।
चित्रगुच्छा कुम्भदासी कूटं पूर्द्वारयन्त्रयोः ॥ ८५ ॥
मायादम्भाद्रिशृङ्गेषु सीराङ्गेऽनृततुच्छयोः ।
निश्चले योधने राशौ कृष्टिः कर्षणधीमतोः ॥ ८६ ॥
कोट्युत्कर्षाटनीसंख्याश्रिषु खूटस्तृणे कफे ।
टङ्केऽन्धकूपे प्रहारे खाटिः शवरथे किणे ॥ ८७ ॥
एकग्रहेऽथ खेटः स्याद्ग्रामभेदे कफेऽधमे ।
स्फरे मृगव्ये गृष्टिस्तु सकृत्सूतगवी भवेत् ॥ ८८ ॥
वराहक्रान्ता च घटा घटने गजसंहतौ ।
गोष्ठ्यां, घटस्त्विभशिरःकूटे समाधिकुम्भयोः ॥ ८९ ॥
घृष्टिः स्पर्धाघर्षणयोर्विष्णुक्रान्तावराहयोः ।
घोण्टा पूगवदरयोश्चाटुश्चाटुपिचण्डयोः ॥ ९० ॥
त्रत्यासने, जटा केशविकारे मांसिमूलयोः ।
झाटो व्रणादिसंमार्ष्टौ कुञ्जकान्तारयोरपि ॥ ९१ ॥
त्वष्टाऽर्के विश्वकृत्तक्ष्णोस्त्रुटिः संशयलेशयोः ।
सूक्ष्मैलायां कालमाने त्रोटिश्चञ्च्वां खगान्तरे ॥ ९२ ॥
मीनकट्फलयोर्दिष्टं दैवे दिष्टस्त्वनेहसि ।
दिष्टिरानन्दे माने च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ॥ ९३ ॥
पट्टश्चतुष्पथे पीठे राजादेः शासनान्तरे ।
व्रणादिबन्धने पेषाश्मनि पट्टी ललाटिका ॥ ९४ ॥
रोध्रोऽथ पटु लवणे, पटुस्तीक्ष्णपटोलयोः ।
स्फुटे रोगविहीने च छत्रायां चतुरेऽपि च ॥ ९५ ॥
पुष्टिः स्यात्पोषणे वृद्धौ फटा तु कैतवे फणे ।
भटो वीरे म्लेच्छभेदेऽपि च भृष्टिस्तु भर्जने ॥ ९६ ॥

शून्यवाट्यामथ म्लिष्टं म्लानमस्पष्टभाषितम् ।
यष्टिर्भार्ग्यां मधुयष्ट्यां ध्वजदण्डेऽस्त्रहारयोः ॥ ९७ ॥
रिष्टं क्षेमे शुभे रिष्टोऽसौ लाटो वस्त्रदेशयोः ।
वटो गोले गुणे भक्ष्ये वृक्षे साम्यवराटयोः ॥ ९८ ॥
वाटः पथि वृतौ वाटं वरण्डेङ्गान्नभेदयोः ।
वाटी वास्तौ गृहोद्यानकट्योर्विटस्तु मूषिके ॥ ९९ ॥
खदिरे लवणे षिङ्गेऽद्रौ च व्युष्टं फले दिने ।
पर्युषिते प्रभाते च व्युष्टिः स्तुतिफलर्द्धिषु ॥ १०० ॥
विष्टिः कर्मकरे मूल्ये भद्राऽऽजूप्रेषणेषु च ।
सटा जटाकेसरयोः स्फुटो व्यक्तप्रफुल्लयोः ॥ १०१ ॥
सिते व्याप्ते स्फुटिस्त्वङ्घ्रिस्फोटे निर्भिन्नकर्कटी ।
सृष्टिः स्वभावे निर्माणे सृष्टं निश्चितयुक्तयोः ॥ १०२ ॥
प्रचुरे निर्मिते चाथ हृष्टो रोमाञ्चसंयुते ।
जातहर्षे प्रतिहते विस्मिते हृषितो यथा ॥ १०३ ॥
कटो मुनौ स्वर ऋचां भेदे तत्पाठिवेदिनोः ।

इति द्विस्वरटान्ताः ।

कण्ठो ध्वनौ सांनिधाने ग्रीवायां मदनद्रुमे ॥ १०४ ॥
काष्ठं दारुणि काष्ठा तु प्रकर्षे स्थानमात्रके ।
दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ॥ १०५ ॥
कुण्ठोऽकर्मण्ये मूर्खे च कुष्ठं भेषजरोगयोः ।
कोष्ठो निजे कुसूले च कुक्षावन्तर्गृहस्य च ॥ १०६ ॥
गोष्ठं गोस्थानके गोष्ठी संलापे परिषद्यपि ।
ज्येष्ठः स्यादग्रजे श्रेष्ठे मासभेदातिवृद्धयोः ॥ १०७ ॥
ज्येष्ठाभे गृहगोधायां, निष्ठोत्कर्षव्यवस्थयोः ।
क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते ॥ १०८ ॥
प्रष्ठः श्रेष्ठाग्रयोरुक्तः प्रष्ठा चण्डालिकौषधौ ।
पृष्ठं पश्चिममात्रे स्याच्छरीरावयवान्तरे ॥ १०९ ॥
वण्ठः कुन्तायुधे खर्वे भृत्याकृतविवाहयोः ।

शठो मध्यस्थपुरुषे धूर्ते धत्तूरकेऽपि च ॥ ११० ॥
श्रेष्ठोऽन्ये धनदे षष्ठी गौरी षण्णां च पूरणी ।
हठोऽम्बुपर्ण्यां प्रसभेऽण्डपेशीकोशमुष्कयोः ॥ १११ ॥
इति द्विस्वरठान्ताः ।
इडेलावत्स्वर्गनाडीभूवाग्गोषु बुधस्त्रियाम् ।
काण्डो नालेऽधमे वर्गे द्रुस्कन्धेऽवसरे शरे ॥ ११२ ॥
सहःश्लाघाम्बुषु स्तम्बे क्रीडा केल्यामनादरे ।
कुण्डी कमण्डलौ कुण्डो जाराज्जीवत्पतेः सुते ॥ ११३ ॥
देवतोयाशये स्थाल्यां क्ष्वेडः कर्णामयेऽध्वनौ ।
विषे वक्रे, क्ष्वेडा सिंहनादवंशशलाकयोः ॥ ११४ ॥
क्ष्वेडं लोहितार्कफले घोषपुष्पे दुरासदे ।
क्रोडः कोले शनौ क्रोडमङ्कं खण्डोऽर्धे ऐक्षवे ॥ ११५ ॥
मणिदोषे च गण्डस्तु वीरे पिटकचिह्नयोः ।
कपोले गण्डके योगे वाजिभूषणबुद्बुदे ॥ ११६ ॥
गडुः पृष्ठगुडे कुब्जे गडो मीनान्तराययोः ।
गुडः कुञ्जरसंनाहे गोलकेक्षुविकारयोः ॥ ११७ ॥
गुडा तु गुडिकस्नुह्योर्गोण्डः स्याद्वृद्धनाभिके ।
पामरजातौ, चण्डस्तु यमदासेऽतिकोपने ॥ ११८ ॥
तीव्रे दैत्यविशेषे च चण्डी तु शिवयोषिति ।
चण्डा धनहरीशङ्खपुष्प्योश्चूडाशिखाग्रयोः ॥ ११९ ॥
बाहुभूषावलभ्योश्च चोडः कञ्चुकदेशयोः ।
जडो मूर्खे हिमाघ्राते जडा स्याच्छूकशिम्बिका ॥ १२० ॥
ताडोऽद्रौ ताडने घोषे मुष्टिमेयतृणादिके ।
ताडी तालीदलतरौ दण्डः सैन्ये दमे यमे ॥ १२१ ॥
मानव्यूहग्रहभेदेष्वश्वेऽर्कानुचरे मथि ।
प्रकाण्डे लगुडे कोणे चतुर्थोपायगर्वयोः ॥ १२२ ॥
नाडी कुहनचर्यायां घटिकागण्डदूर्वयोः ।

---

१ रहः । २ दरालसे ।

नाले गुणान्तरे स्नायौ नीडं स्थाने खगालये ॥ १२३ ॥
पण्डः षण्डे पण्डा बुद्धौ पाण्डुः कुन्तीपतौ सिते ।
पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिल्हयोः ॥ १२४ ॥
कवले, पिण्डं तु वेश्मैकदेशे जीवनायसोः ।
बले सान्द्रे पिण्ड्यलाबूखर्जूर्योस्तगिरेऽपि च ॥ १२५ ॥
पीडाऽर्तिमर्दनोत्तंसकृपासु सरलद्रुमे ।
भाण्डं मूलवणिग्वित्ते तुरङ्गाणां च मण्डने ॥ १२६ ॥
नदीकूलद्वयीमध्ये भूषणे भाजनेऽपि च ।
मण्डो मस्तुनि भूषायामेरण्डे सारपिच्छयोः ॥ १२७ ॥
शाके, मण्डा त्वामलक्यां मुण्डो मुण्डितशीर्षयोः ।
राहौ दैत्यान्तरे, रण्डा त्वाखुकर्णी[1]मृतप्रिया ॥ १२८ ॥
व्याडो हिंस्रपशौ सर्पे शुण्डा करिकरः सुरा ।
जलेभा नलिनी वारस्त्री, शुण्डो मदनिर्झरे ॥ १२९ ॥
शौण्डी चविकापिप्पल्योः शौण्डो विख्यातमत्तयोः ।
षडः पेयान्तरे भेदे षण्डः कानन इट्चरे ॥ १३० ॥

इति द्विस्वरडान्ताः ।

गूढं रहःसंवृतयोर्दाढा दंष्ट्राऽभिलाषयोः ।
दृढः शक्ते भृशे स्थूले बाढं भृशप्रतिज्ञयोः ॥ १३१ ॥
माढिर्दैन्यं पत्रसिराऽर्चा[2] मूढस्तान्द्रिते जडे ।
राढा सुह्मेषु शोभायां व्यूढा[3] न्यस्तोरुसंहताः ॥ १३२ ॥
वोढा स्याद्भारिके सूते शण्ढषण्ढौ तु सौविदे ।
वन्ध्यपुंसीट्चरे क्लीबे, सोढा मर्षणशक्तयोः ॥ १३३ ॥

इति द्विस्वरढान्ताः ।

अणिराणिवदश्रौ स्यात्सीमन्यक्षाग्रकीलके ।
अणुर्व्रीह्यल्पयोरुष्णा ग्रीष्मदक्षातपाऽहिमाः ॥ १३४ ॥
ऊर्णा भ्रूमध्यगावर्ते मेषादीनां च लोमनि ।
ऋणं देये जलदुर्गे कणो धान्यांशलेशयोः ॥ १३५ ॥

१ व्रणान्तरे । २ पर्णी । ३ व्यक्त ।

कणा जीरकपिप्पल्योः कर्णश्चम्पापतौ श्रुतौ।
क्षणः कालविशेषे स्यात्पर्वण्यवसरे महे ॥ १३६ ॥
व्यापारविकलत्वे च परतन्त्रत्वमध्ययोः।
कीर्णक्षिप्ते हते छन्ने कुणिः कुकरवृक्षयोः ॥ १३७ ॥
कृष्णः काके पिके वर्णे विष्णौ व्यासेऽर्जुने कलौ।
कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि ॥ १३८ ॥
कृष्णं तु मरिचे लोहे कोणो वीणादिवादने।
लगुडेऽश्रौ लोहिताङ्गे गणः प्रथमसंख्ययोः ॥ १३९ ॥
समूहे सैन्यभेदेऽथ गुणो ज्यासूदतन्तुषु।
रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीमे इन्द्रिये ॥ १४० ॥
रूपादावप्रधाने च दोषान्यास्मिन्विशेषणे।
गेष्णुर्नटे गायने च घ्राणं तु घ्रातघोणयोः ॥ १४१ ॥
घृणा तु स्याज्जुगुप्सायां करुणायां, घृणिः पुनः।
अंशुज्वालातरङ्गेषु चूर्णा निवासयुक्तिषु ॥ १४२ ॥
चूर्णं क्षोदे क्षारभेदे जीर्णो जीर्णद्रुमेन्दुषु।
जिष्णुः शक्रेऽर्जुने विष्णौ जित्वरेऽर्के वसुष्वपि ॥ १४३ ॥
झूणिः क्रमुकभेदे स्याद् दुष्टदैवश्रुतावपि।
त्राणं त्राते रक्षणे च त्रायमाणौषधावपि ॥ १४४ ॥
तीक्ष्णं समुद्रलवणे विषायोर्मरकाजिषु।
आत्मत्यागिनि तिग्मे च तूणी नीलीनिषङ्गयोः ॥ १४५ ॥
द्रुणाः स्याद्वृश्चिके भृङ्गे द्रुणं चापकृपाणयोः।
द्रुणी कूर्म्यां जलद्रोण्यां देष्णुर्दातरि दुर्दमे ॥ १४६ ॥
द्रोणः पार्थगुरौ काके माने द्रोणी तु नीवृति।
नौभेदे शैलसन्धौ च पणः कार्षापणे ग्लहे ॥ १४७ ॥
विक्रय्यशाकादिबद्धमुष्टौ मूल्ये भृतौ धने।
व्यवहारे च द्यूताद्युत्सृष्टे गण्डकविंशतौ ॥ १४८ ॥

१ सूत्र। २ सूद। ३ जित्वरार्क।
४ विषायोपरसाजिषु। ५ दुर्दुमे।

पर्णास्त्रिपत्रे, पर्णं तु पत्रे, प्राणोऽनिले बले ।
हृद्रायौ पूरिते गन्धरसे, प्राणास्तु जीविते ॥ १४९ ॥
पार्ष्णिः कुम्भ्यां चमूपृष्ठे पादमूलोन्मदस्त्रियोः ।
पूर्णः कृत्स्ने पूरिते च फाणिर्गुडकरम्बयोः ॥ १५० ॥
बाणो वृक्षविशेषे स्याच्छरस्यावयवे शरे ।
बलिपुत्रेऽप्यथ भ्रूणो गर्भिण्यां श्रोत्रियद्विजे ॥ १५१ ॥
अर्भके स्त्रैणगर्भे च माणिस्त्वजागलस्तने ।
मेढ्राग्रेऽलिञ्जरे रत्ने मोणः सर्पकरण्डके ॥ १५२ ॥
वाने नक्रमक्षिकायां रणः कोणे क्वणे युधि ।
रेणुर्धूल्यां पर्पटके वर्णः स्वर्णे व्रते स्तुतौ ॥ १५३ ॥
रूपे द्विजादौ शुक्लादौ कुथायामक्षरे गुणे ।
भेदे गतिक्रमे चित्रे यशस्तालविशेषयोः ॥ १५४ ॥
अङ्गरागे च वर्णं तु कुङ्कुमे वाणिरम्बुदे ।
व्यूतौ मूल्ये सरस्वत्यां वीणा स्याद्वल्लकी तडित् ॥ १५५ ॥
वृष्णिर्मेषे यादवे च वेणी सेतुप्रवाहयोः ।
देवताडे केशबन्धे वेणुर्वंशे नृपान्तरे ॥ १५६ ॥
शाणः कषे मानभेदे श्रेण्यालयां कारुसंहतौ ।
शोणो नदे रक्तवर्णे श्योनाकेऽग्नौ हयान्तरे ॥ १५७ ॥
श्राणा यवाग्वां श्राणं तु पक्के शाणी तु वस्त्रभित् ।
स्थाणुः कीले हरे स्थूणा सूर्म्यां स्तम्भे रुगन्तरे ॥ १५८ ॥

इति द्विस्वरणान्ताः ।

अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ।
अवयवेऽप्यथाऽर्हन् स्यात्पूज्ये तीर्थकरेऽपि च ॥ १५९ ॥
अस्तः क्षिप्ते पश्चिमाद्रावर्तिस्त्वटनिपीडयोः ।
आप्तो लब्धे च सत्ये चाप्याप्तिः सम्बन्धलाभयोः ॥ १६० ॥
ईतिरजन्ये प्रवासे स्यादूतिः स्यूतिरक्षयोः ।
ऋतं शिलोञ्छे पानीये पूजिते दीप्तसत्ययोः ॥ १६१ ॥

---

१ माण । २ तीर्थे जिने ।

ऋतिर्जुगुप्साकल्याणगतिस्पर्धास्वथो ऋतुः।
स्त्रीणां पुष्पे वसन्तादावार्तवः कर्बुर आगते ॥ १६२ ॥
क्षत्ता शूद्रात्क्षत्रियायां जाते सारथिवेधसोः।
नियुक्ते दासजे द्वाःस्थे कन्तुः कामकुसूलयोः ॥ १६३ ॥
कान्तो रम्ये प्रिये ग्राव्णि कान्ता प्रियङ्गुयोषितोः।
कान्तिः शोभाकामनयोः क्षितिर्गेहे भुवि क्षये ॥ १६४ ॥
कीर्तिर्यशसि विस्तारे प्रासादे कर्दमेऽपि च।
कुन्तः प्रासे चण्डभावे क्षुद्रजन्तौ गवेधुके ॥ १६५ ॥
कुन्ती पाण्डुप्रियायां स्यात् सल्लक्यां गुग्गुलुद्रुमे।
कृतं पर्याप्तयुगयोर्विहिते हिंसिते फले ॥ १६६ ॥
कृत्तं छिन्ने वेष्टिते च केतुर्द्युतिपताकयोः।
ग्रहोत्पातारिचिह्नेषु गर्तोऽवटे कुकुन्दरे ॥ १६७ ॥
त्रिगर्तांशेऽप्यथ ग्रस्तं जग्धे लुप्तपदोदिते।
गतिर्वहद्व्रणे ज्ञाने यात्रोपायदशाध्वसु ॥ १६८ ॥
गातुः पुँस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च।
गीतिश्छन्दसि गाने च गीतं शब्दितगानयोः ॥ १६९ ॥
गुप्तं गूढे त्राते गुप्तिर्यमे भूगर्तरक्षयोः।
कारायां घृतमाज्याम्बुदीप्तेष्वथ, चिताचिती ॥ १७० ॥
मृतार्थदारुषु चये जगल्लोकेऽङ्गवायुषु।
जातं जात्योघजनिषु जातिः सामान्यगोत्रयोः ॥ १७१ ॥
मालत्यामामलक्यां च चुल्ल्यां कम्पिल्यजन्मनोः।
जातीफले छन्दसि च ज्ञातिः पितृसगोत्रयोः ॥ १७२ ॥
ततं वीणादिवाद्ये स्याचतो व्याप्तेऽनिले पृथौ।
तातोऽनुकम्प्ये पितरि तिक्तस्तु सुरभौ रसे ॥ १७३ ॥
तिक्ता तु कटुरोहिण्यां तिक्तं पर्पटकौषधे।
त्रेतायुगेऽग्नित्रये च दन्तो दशनसानुषु ॥ १७४ ॥

१ पातादि।

दन्त्योषध्यामथ दितिर्दैत्यमातरि खण्डने।
दीप्तं निर्भासिते दग्धे द्रुतं शीघ्रविलीनयोः ॥ १७५ ॥
द्युतिस्तु शोभादीधित्योर्धाता वेधसि पालके।
धातू रसादौ श्लेष्मादौ भ्वादिग्रावविकारयोः ॥ १७६ ॥
महाभूतेषु लोहेषु शब्दादाविन्द्रियेऽस्थनि।
धुतं त्यक्ते कम्पिते च धूतौ कम्पितभर्त्सितौ ॥ १७७ ॥
धूर्तं तु खण्डलवणे धूर्तो धत्तूरमायिनोः।
धृतिर्योगविशेषे स्याद्धारणाधैर्ययोः सुखे ॥ १७८ ॥
सन्तोषाध्वरयोश्चापि नतस्तगरनम्रयोः।
नीतिर्नये प्रापणे च नृतिः स्यान्नर्तने क्रमौ ॥ १७९ ॥
पतिः प्रभौ गतौ मूले पक्तिर्गौरव[1]पाकयोः।
पङ्क्तिश्छन्दःश्रेण्योः पत्तिः सेनाभित्पद्गयोर्गतौ ॥ १८० ॥
प्राप्तिर्महोदये लाभे पित्सन् पिपतिषन्यथा।
पतनेच्छौ विहङ्गे च पीतो वर्णनिपीतयोः ॥ १८१ ॥
पीता हारिद्रा पीतिः पानेऽश्वे प्रीतिः स्मरस्त्रियाम्।
प्रेम्णि योगमुदोः, पुस्तं शिल्पे लेप्यादिकर्मणि ॥ १८२ ॥
पुस्तके, प्लुतमश्वस्य गतौ प्लुतस्त्रिमात्रके।
पूर्तं पूरितखाताद्योः पृषत्पृषतवन्मृगे ॥ १८३ ॥
बिन्दौ, प्रेतो मृते भूतविशेषे च परेतवत्।
पोतः शिशौ प्रवहणे प्रोतो[2] गुम्फितवाससोः ॥ १८४ ॥
भक्तमन्ने तत्परे च भर्ता पोष्टरि धारके।
भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोः ॥ १८५ ॥
भास्वान् दीप्ते रवौ भ्रान्तिर्मिथ्याज्ञानेऽनवस्थितौ।
"भीतं भये भययुते भीतिः साध्वसकम्पयोः" ॥
भित्तिः कुड्ये प्रदेशे च भूतं सत्योपमानयोः ॥ १८६ ॥
प्राप्तेऽतीते पिशाचादौ पृथ्व्यादौ जन्तुयुक्तयोः।

१ गैरिक। २ प्रोतम्।

भूभृन्महीधरे पृथ्वीपतौ भूतिस्तु भस्मनि ॥ १८७ ॥
मासपाकविशेषे च संपदुत्पादयोरपि ।
भृतिर्मूल्यभरणयोर्मतं स्यात्समतेऽर्चिते ॥ १८८ ॥
महद् बृहति धीतत्त्वे राज्ये, मरुत्सुरेऽनिले ।
मतिर्बुद्धीच्छयोर्माता गौर्दुर्गा जननी मही ॥ १८९ ॥
मातरस्तु ब्रह्माण्याद्या मितिरैयत्यमानयोः ।
मन्तुः स्यादपराधेऽपि मनुष्येऽपि प्रजापतौ ॥ १९० ॥
मुक्ता मौक्तिकपुंश्चल्योर्मुक्तिर्मोचनमोक्षयोः ।
मूर्तिः पुनः प्रतिमायां कायकाठिन्ययोरपि ॥ १९१ ॥
मृतं मृत्यौ याचिते च यन्ता सूते निषादिनि ।
यतिर्निकारे विरतौ भिक्षौ युतोऽन्विते पृथक् ॥ १९२ ॥
युक्तिर्न्याये योजने च रक्तं नील्यादिरञ्जिते ।
कुङ्कुमेऽसृज्यनुरक्ते प्राचीनामलकेऽरुणे ॥ १९३ ॥
रतिः स्मरस्त्रियां रागे रते रीतिस्तु पित्तले ।
वैदर्भ्यादौ लोहकिट्टे सीमनि स्रवणे गतौ ॥ १९४ ॥
लता ज्योतिष्मतीदूर्वाशाखावल्लीप्रियङ्गुषु ।
स्पृक्कामाधव्योः कस्तूर्यां लिप्तं मुक्तविलिप्तयोः ॥ १९५ ॥
विषाक्ते, लूता तु रोगे पिपीलिकोर्णनाभयोः ।
वर्तिर्गात्रानुलेपिन्यां दशायां दीपकस्य च ॥ १९६ ॥
दीपे भेषजनिर्माणानयनाञ्जनलेखयोः ।
व्यक्तो मनीषिस्फुटयोर्वार्त्ता वार्त्ताक्युदन्तयोः ॥ १९७ ॥
कृष्यादौ वर्तने वार्तं स्वारोग्यारोगफल्गुषु ।
वृत्तिशालिन्यथ व्याप्तिर्व्यापने लम्भनेऽपि च ॥ १९८ ॥
वास्तु स्याद् गृहभूपुर्योर्गृहे सीमसुरुङ्गयोः ।
वित्तं विचारिते ख्याते धने वित्तिस्तु संभवे ॥ १९९ ॥
ज्ञाने लाभे विचारे च वीतमङ्कुशकर्मणि ।

१ धीरत्वे । २ भुक्त ।

असारा[1]श्वगजे शान्ते वीतिरश्वेऽशने गतौ ॥ २०० ॥
प्रजने धावने दीप्तौ वृत्तं वृत्तौ दृढे मृते ।
चारित्रे वर्तुले छन्दस्य[2]तीताधीते[3]योर्वृते ॥ २०१ ॥
वृन्तं स्तनमुखे पुष्पबन्धे वृत्तिस्तु वर्तने ।
कैशिक्यादौ विवरणे वृतिर्वरणवाटयोः ॥ २०२ ॥
शक्तिरायुधभेदे स्यादुत्साहादौ बले श्रि[4]याम् ।
शस्तं क्षेमे प्रशस्ते च शान्तोदान्ते रसान्तरे ॥ २०३ ॥
शास्ता जिने शासके च शान्तिर्भद्रे शमेऽर्हति ।
शितशातौ कृशे तीक्ष्णे शितिर्भूर्जे सितेऽसिते ॥ २०४ ॥
श्रीमान्मनोज्ञे तिलकपादपे धनवत्यपि ।
शीतो हिमे च जिह्मे च वानीरबहुवारयोः ॥ २०५ ॥
शीतं गुणे शुक्तमम्ले पूति[5]भूते च कर्कशे ।
शुक्तिः शङ्खनके शङ्खे कपालखण्डदृग्रुजोः ॥ २०६ ॥
नख[6]श्वावर्तयो,र्मुक्ता स्फोटदुर्नामयोरपि ।
श्रुतमाकर्णि[7]ते शास्त्रे श्रुतिराम्नायवार्तयोः ॥ २०७ ॥
षड्जाद्यारम्भिकायां च कर्णाकर्णनयोरपि ।
श्वेतं रूप्ये श्वेतो द्वीपे वर्णे शैले कपर्दके ॥ २०८ ॥
श्वेता तु शङ्खिनीकाष्ठपाटल्योः स्यात्सती पुनः ।
कात्यायन्यां च साध्व्यां च सातिर्दानावसानयोः ॥२०९॥
सितस्त्ववसिते बद्धे वर्णे सिता तु शर्करा ।
स्थितमूर्ध्वे सप्र[8]तिज्ञे स्थितिः स्थाने च सीम्नि च ॥२१०॥
सीता जनकजागङ्गाभेदयोर्हलपद्धतौ ।
सुतः पुत्रे नृपे, सुप्तिः स्वापे स्पर्शाज्ञतारुजि ॥ २११ ॥
सूतः पारदसारथ्योः प्रसूतेरितबन्दिषु ।
ब्राह्मण्यां क्षत्रियाज्जाते तक्षिण, सृतिर्गतौ पथि ॥ २१२ ॥

---

१ असारेऽश्वगजे । २ स्वतीत । ३ अधीन । ४ स्त्रियाम् । ५ पूते । ६ नखा । ७ आकर्णने । ८ प्रतिज्ञेय ।

स्मृतिः स्मरणधीच्छासु शास्त्रे, सेतुस्तु संवरे[1]।
नदीसंक्रमे[2]ऽथ हस्तः करे मानोडुभेदयोः[3]॥ २१३॥
केशात्कलापे शुण्डायां हरित् दिशि तृणान्तरे।
वर्णभेदेऽश्वभेदे च हितं पथ्ये गते धृते॥ २१४॥
हेतिर्ज्वालास्त्रसूर्यांशुषु

इति द्विस्वरतान्ताः।

अर्थो हेतौ प्रयोजने।
निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु॥ २१५॥
आस्था यत्नालम्बनयोरस्थानापेक्षयोरपि।
कन्था पुरे प्रावरणे क्राथो व्यसनदुःखयोः॥ २१६॥
द्रवनिष्पाकेऽथ कुथः स्यादास्तरणदर्भयोः।
कोथस्तु मथने नेत्ररुग्भेदे शटितेऽपि च॥ २१७॥
ग्रन्थो गुम्फे धने शास्त्रे द्वात्रिंशद्वर्णनिर्मितौ।
ग्रन्थिर्वस्त्रादिबन्धे रुग्भेदे कौटिल्यपर्वणोः॥ २१८॥
ग्रन्थि तु ग्रन्थिपर्णे स्याद्गाथा वाग्भेदवृत्तयोः।
तीर्थं शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः॥ २१९॥
ऋषिजुष्टे जले सत्रिण्युपाये स्त्रीरजस्यपि।
योनौ पात्रे दर्शनेषु तुत्थोऽग्नौ तुत्थमञ्जने॥ २२०॥
तुत्था नील्यां सूक्ष्मैलायां दुःस्थो दुर्गतमूर्खयोः।
प्रस्थः सानौ मानभेदे पीथोऽर्के पीथमम्बुनि॥ २२१॥
पृथुर्विशाले भूपाले वापिका[4]कृष्णजीरयोः।
प्रोथोऽश्वघोणाऽध्वगयोः कट्यां, मन्थो रवौ मथि॥ २२२॥
सात्क्तवे नेत्ररोगे च यूथं तिर्यग्गणे गणे।
यूथी तु मागधीपुष्पविशेषयोः कुरण्टके॥ २२३॥
रथस्तु स्यन्दने पादे शरीरे वेतसद्रुमे।
वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके॥ २२४॥
संस्था स्पशे स्थितौ मृत्यौ सार्थो वृन्दे वणिग्गणे।

---

[1] संचरे। [2] क्रम। [3] मान। [4] वाप्पिका।

सिक्थं नीलयां मधूच्छिष्टे सिक्थो भक्तपुलाकके ॥ २२५ ॥

इति द्विस्वरथान्ताः।

अब्दः संवत्सरे मेघे मुस्तके गिरिभिद्यपि ।
अन्दुः स्यान्निगडे भूषाभेदे ककुदवत्ककुत् ॥ २२६ ॥
श्रेष्ठे वृषाङ्गे राट्चिह्ने क्रव्यान्मांसाशिरक्षसोः ।
कन्दोऽब्दे सूरणे सस्यमूले, कुन्दोऽच्युते निधौ ॥ २२७ ॥
चक्रभ्रमौ च माध्ये च क्षोदः पेषणचूर्णयोः ।
गदः कृष्णानुजे रोगे गदा प्रहरणान्तरे ॥ २२८ ॥
छदः पत्रे पतत्रे च ग्रन्थिपर्णतमालयोः ।
छन्दो वशेऽभिप्राये च दृषत्पाषाणमात्रके ॥ २२९ ॥
निष्पेषणार्थपट्टेऽपि धीदा कन्यामनीषयोः ।
नदो ह्रदेऽब्धौ निनदे नन्दा सम्पद्यलिञ्जरे ॥ २३० ॥
तिथिभेदे च नन्दिस्तु प्रतीहारे पिनाकिनः ।
आनन्दने च द्यूते च निन्दा कुत्सापवादयोः ॥ २३१ ॥
पदं स्थाने विभक्त्यन्ते शब्दे वाक्येऽङ्क[1]वस्तुनोः ।
त्राणे पादे पादचिह्ने व्यवसायापदेशयोः ॥ २३२ ॥
पादो मूलोस्रतुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते ।
भन्दः कल्याणे सौख्ये च प्रसन्नास्वरमांसयोः ॥ २३३ ॥
भेदो विदारणे द्वैध उपजापविशेषयोः ।
मदो रेतस्यहङ्कारे मद्ये हर्षेभदानयोः ॥ २३४ ॥
कस्तूरिकायां क्षैब्ये च मदी कृषकवस्तुनि ।
मन्दो मूढे शनौ रोगिण्यलसे भाग्यवर्जिते ॥ २३५ ॥
गजजातिप्रभेदेऽल्पे स्वैरे मन्दरते खले ।
मृदुतीक्ष्णे कोमले च रदो दन्ते विलेखने ॥ २३६ ॥
विदा ज्ञानधियोर्बिन्दुर्वि[2]प्रुड्ज्ञात्रो रदक्षते ।
वेदिरङ्गुलिमुद्रायां बुद्धेऽलङ्कृतभूतले ॥ २३७ ॥
शब्दोऽक्षरे यशोगीत्योर्वाक्ये खे श्रवणे ध्वनौ ।

---

१ एकवस्तुनोः । २ बुधे ।

शरद्वर्षात्यये वर्षे शादः कर्दमशष्पयोः ॥ २३८ ॥
संवित्संभाषणे ज्ञाने सङ्ग्रामे नाम्नि तोषणे।
क्रियाकारे प्रतिज्ञायां सङ्केताचारयोरपि ॥ २३९ ॥
सम्पद्वृद्धौ गुणोत्कर्षे हारे स्वादुस्तु सुन्दरे।
मृष्टे, सूदः सूपकारे व्यञ्जनेऽपि च सूपवत् ॥ २४० ॥
स्वेदो धर्मे स्वेदने च—

इति द्विस्वरदान्ताः।

अन्धोऽन्धकारेऽक्षिवर्जिते।
अर्धः खण्डेऽर्धं समांशेऽथाब्धिः सरसि सागरे ॥ २४१ ॥
आधिर्मनोर्तौ व्यसनेऽधिष्ठाने बन्धकाऽऽशयोः।
ऋद्धं समृद्धे सिद्धान्ने गन्धः सम्बन्धलेशयोः ॥ २४२ ॥
गन्धकामोदगर्वेषु स्याद्गाधस्तललिप्सयोः।
गोधा प्राणिविशेषे स्याज्ज्याघातस्य च वारणे ॥ २४३ ॥
दधि गोरसभेदे स्यात्तथा श्रीवासवासयोः।
दिग्धो लिप्ते विषाक्तेषौ प्रवृद्धस्नेहयोरपि ॥ २४४ ॥
दुग्धं क्षीरे पूरिते च दोग्धा गोपालवत्सयोः।
अर्थोपजीवक[1]कवौ बन्ध आधौ च बन्धने ॥ २४५ ॥
बन्धुर्भ्रातृबान्धवयोर्बाधा दुःखनिषेधयोः।
बुधः सौम्ये कवौ बुद्धः पण्डिते बुधिते जिने ॥ २४६ ॥
बोधिर्बौद्धसमाधौ चाऽर्हद्धर्मांप्तौ च पिप्पले।
मधुश्चैत्रर्तुदैत्येषु जीवाशो[2]कमधूकयोः ॥ २४७ ॥
मधु क्षीरे जले मद्ये क्षौद्रे पुष्परसेऽपि च।
मिद्धं चित्ताभिसंक्षेपे निद्रालसितयोरपि ॥ २४८ ॥
मुग्धो मूढे रम्ये, मेधः क्रतौ, मेधा तु शेमुषी।
राधो वैशाखमासे स्याद्राधा विद्युद्विशाखयोः ॥ २४९ ॥
विष्णुक्रान्तामलक्योश्च गोपीवेधविशेषयोः।
लुब्ध आकाङ्क्षिणि व्याधे वधो वधककहिंसयोः ॥२५०॥

---

१ जीविनि। २ जीवाशोक।

वधूः पत्न्यां स्नुषानार्योः स्पृक्काशारिवयोरपि ।
नवपरिणीतायां च व्याधो मृगयुदुष्टयोः ॥ २५१ ॥
विद्धं सदृग्वेधितयोः क्षिप्ते विधर्द्धिमूलयोः ।
प्रकारेभान्नविधिषु विधिर्ब्रह्मविधानयोः ॥ २५२ ॥
विधिवाक्ये च दैवे च प्रकारे कालकल्पयोः ।
विधुश्चन्द्रेऽच्युते वीरुल्लतायां विटपेऽपि च ॥ २५३ ॥
वृद्धः प्राज्ञे स्थविरे च वृद्धं शैलेयरूढयोः ।
वृद्धिः कलान्तरे हर्षे वर्धने भेषजान्तरे ॥ २५४ ॥
श्रद्धास्तिक्येऽभिलाषे च श्राद्धं श्रद्धासमन्विते ।
हव्यकव्यविधाने च शुद्धः केवलपूतयोः ॥ २५५ ॥
स्कन्धः प्रकाण्डे कायेंऽसे[1] विज्ञानादिषु पञ्चसु ।
नृपे समूहे व्यूहे च सन्धा स्थितिप्रतिज्ञयोः ॥ २५६ ॥
सन्धिर्योनौ सुरुङ्गायां नाट्येऽङ्गे श्लेषभेदयोः ।
साधुर्जैने[2] मुनौ वार्द्धुषिके सज्जनरम्ययोः ॥ २५७ ॥
सिद्धो व्याड्यादिके[3] दैवयोनौ निष्पन्नमुक्तयोः ।
नित्ये प्रसिद्धे, सिद्धिस्तु मोक्षे निष्पत्तियोगयोः ॥२५८॥
सिन्धुर्नद्यां गजमदेऽब्धौ देशनदभेदयोः ।
सुधा गङ्गेष्टिकास्नुह्योर्मूर्वालेपाऽमृतेषु च ॥ २५९ ॥

इति द्विस्वरधान्ताः ।

अन्नं भक्तेऽशिते, ऽर्वाऽश्वेऽधमे, ऽध्वा कालवर्त्मनोः ।
संस्थाने सास्रवस्कन्धेऽर्थिनौ याचकसेवकौ ॥ २६० ॥
आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे ।
परमात्मनि जीवेऽर्के हुताशनसमीरयोः ॥ २६१ ॥
स्वभावेऽथेन ईशेऽर्केऽथोन्नं क्लिन्ने दयापरे ।
उष्माणस्तु निदाघोष्णग्रीष्माः शषसहा अपि ॥ २६२ ॥
कर्म कारकभेदे स्यात्क्रियायां च शुभाशुभे ।
कामी स्यात्कमने चक्रवाके पारावतेऽपि च ॥ २६३ ॥

१ कायांस । २ जिने । ३ व्यासादि

कृती योग्ये बुद्धे खड्गी गण्डके खड्गधारिणि ।
ग्रावाऽश्मनि गिरौ गोमी फेरौ गोमत्युपासके ॥ २६४ ॥
घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे ।
सङ्घे मुस्ते, घनं मध्ये नृत्तवाद्यप्रकारयोः ॥ २६५ ॥
चर्म त्वचि स्फरे चर्मी भूर्जे फलकिभृङ्गिणोः ।
चक्री कोके कुलालेऽहौ वैकुण्ठे चक्रवर्तिनि ॥ २६६ ॥
चिह्नमङ्के पताकायां चीनो देशैणतन्तुषु ।
व्रीहौ वस्त्रे छद्म शाठ्येऽपदेशे घातिकर्मणि ॥ २६७ ॥
छन्नं रहश्छादितयोश्छिन्ना स्यादमृतेत्वरी ।
छिन्नं भिन्ने, जनो लोके जगद्भेदे पृथग्जने ॥ २६८ ॥
जनी स्नुषावनितयोर्जिनोऽर्हद्बुद्धविष्णुषु ।
ज्योत्स्ना स्याज्ज्योतिःसंयुक्तनिशि चन्द्रातपेऽपि च ॥२६९॥
ज्यौत्स्नी पटोली ज्योत्स्नावन्निशोस्तनुर्वपुस्त्वचोः ।
विरलेऽल्पे कृशे, दण्डी यमे द्वाःस्थसदण्डयोः ॥ २७० ॥
दानं मतङ्गजमदे रक्षणच्छेदशुद्धिषु ।
विश्राणनेऽप्यथ द्युम्नं द्रविणवद्धनौजसोः ॥ २७१ ॥
धन वित्त गोधने च स्याद्धन्व स्थलचापयोः ।
धन्वामरौ धन्वी पार्थे छेके ककुभचापिनोः ॥ २७२ ॥
धनुःशब्दः पियालद्रौ राशिभेदे धनुष्यपि ।
धाम रश्मौ गृहे देहे स्थाने जन्मप्रभावयोः ॥ २७३ ॥
धाना भृष्टयवेऽङ्कूरे धान्याके चूर्णसक्तुषु ।
धेनः समुद्रे धेनी तु नद्यां स्याद्भारतीभिदि ॥ २७४ ॥
धेनुर्गोमात्रके दोग्ध्र्यां गवि नग्नो विवाससि ।
मागधे च क्षपणके नन्दी गिरिशवेत्रिणि ॥ २७५ ॥
गर्दभाण्डे वटे न्यूनं हीनवर्चोनगर्ह्ययोः ।
पर्व प्रस्तावोत्सवयोर्ग्रन्थौ विषुवदादिषु ॥ २७६ ॥

---

१ बुधे । २ प्रभेदयोः । ३ शृङ्गिणोः ।
४ धन्याक । ५ धेना । ६ तच्च ।

दर्शप्रतिपत्सन्धौ च तिथिग्रन्थविशेषयोः ।
पक्ष्माऽक्षिलोम्नि तन्त्वादिसूक्ष्मांशे कुसुमच्छदे ॥ २७७ ॥
गरुत्किअलकयोश्चापि पत्री काण्डे खगे द्रुमे ।
रथेऽद्रौ रथिके श्येने प्रेम तु स्नेहनर्मणोः ॥ २७८ ॥
ब्रह्मा तु तपसि ज्ञाने वेदेऽध्यात्मे[1] द्विजे विधौ ।
ऋत्विग्योगभिदोश्चापि बुध्नो गिरिशमूलयोः ॥ २७९ ॥
भर्म भारे भृतौ हेम्नि भानुरंशौ रवौ दिने ।
भिन्नोऽन्यः सङ्गतः फुल्लो दीर्णो, भोगी भुजङ्गमे ॥२८०॥
वैयावृत्त्यकरे राज्ञि ग्रामण्यां नापितेऽपि च ।
मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे ॥ २८१ ॥
मीनो मत्स्ये राशिभेदे मुनिर्वाचंयमेऽर्हति ।
प्रियालाऽगस्तिः पालाशो मृत्स्ना मृत्सा तु वर्य्यपि ॥२८२॥
यानं युग्ये गतौ योनिः कारणे भगताम्रयोः[3] ।
रत्नं स्वजातिश्रेष्ठे स्यान्मणौ राजा तु पार्थिवे ॥ २८३ ॥
निशाकरे प्रभौ शक्रे यक्षक्षत्रिययोरपि ।
रास्नैलापर्णीसर्पाक्ष्यो रागी कामिनि रङ्करि ॥ २८४ ॥
रोही रोहतिकेऽश्वत्थे वटे, लग्नं तु लज्जिते ।
राशीनामुदये सक्ते लक्ष्म प्रधानचिह्नयोः ॥ २८५ ॥
वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने ।
वस्नं वस्त्रे धने मूल्ये भृतौ वष्र्म पुनस्तनौ ॥ २८६ ॥
प्रमाणे सुन्दराकारे वर्त्म नेत्रच्छदेऽध्वनि ।
वर्णी पुनश्चित्रकरे लेखके ब्रह्मचारिणि ॥ २८७ ॥
वानं शुष्कफले शुष्के सीवने गमने कटे ।
जलसंप्लवे[4]वातोर्मिसुरुङ्गासौरभेषु च ॥ २८८ ॥
वाग्मी पटुबृहस्पत्योर्वाजी बाणे हये खगे ।
विन्नं विचारिते लब्धे स्थिते वृषा तु वासवे ॥ २८९ ॥

---

१ वेदाध्यात्म । २ वैयासति । ३ तोययोः । ४ संप्लुत ।

वृषभे तुरगे पुंसि शाखी तु द्रुमवेदयोः।
राजभेदे शिखी त्वग्नौ वृक्षे केतुग्रहे शरे॥ २९०॥
चूडावति बलीवर्दे मयूरे कुक्कुटे हये।
शीनो मूर्खाजगरयोः श्येनः शुक्के पतत्रिणि॥ २९१॥
स्वप्नः स्वापे सुप्तज्ञाने स्थानं नित्यावकाशयोः।
सादृश्ये सन्निवेशे च स्नानं स्नानीय आप्लवे॥ २९२॥
स्त्यानं स्यात्स्निग्ध आलस्ये प्रतिध्वानघनत्वयोः।
सादी तुरङ्गमारोहे निषादिरथिनोरपि॥ २९३॥
स्वामी प्रभौ गुहे, सूनं पुष्पे, सूना पुनः सुता।
अधोजिव्हा वधस्थानं सूनुः पुत्रे नुजे रवौ॥ २९४॥
हनुः कपोलावयवे मरणामययोरपि।
हरिद्रायामायुधे च हली कृषकसीरिणोः॥ २९५॥
इति द्विस्वरनान्ताः।
कल्पो विकल्पे कल्पद्रौ संवर्ते ब्रह्मवासरे।
शास्त्रे न्याये विधौ, कूपो गर्तेऽन्धौ गुणवृक्षके॥ २९६॥
मृन्माने कूपके, क्षेपो गर्वे लङ्घननिन्दयोः।
विलम्बेरणहेलासु गोपौ भूपालबल्लवौ॥ २९७॥
ग्रामौघगोष्ठाधिकृतौ गोपी गोपालसुन्दरी।
शारिवा रक्तिका तल्पमट्टं शय्याकलत्रयोः॥ २९८॥
त्रपा लज्जाकुलटयोस्त्रपुसीसकरङ्गयोः।
तापः सन्तापे कृच्छ्रे च तापी तु सरिदन्तरे॥ २९९॥
दर्पो मृगमदे गर्वे पुष्पं विकास आर्तवे।
धनदस्य विमाने च कुसुमे नेत्ररुज्यपि॥ ३००॥
बाष्प ऊष्माऽक्षिजलयो रूपं तु श्लोकशब्दयोः।
पशावाकारे सौन्दर्ये नाणके नाटकादिके॥ ३०१॥
ग्रन्थावृत्तौ स्वभावे च रेपः क्रूरे विगर्हिते।
रोपौ रोपणेषू, रोपं रन्ध्रे, लेपस्तु लेपने॥ ३०२॥

१ स्थित्या। २ लोध्रे-इत्युचितम्।

अशने च सुधायां च वपा विवरमेदसोः ।
शष्पं तु प्रतिभाहीनतायां बालतृणेऽपि च ॥ ३०३ ॥
शापः शपथ आक्रोशे शिष्पं स्रुवे क्रियोचिते ।
स्वापो निद्रायां रुग्भेदे शयनाज्ञानमात्रयोः ॥ ३०४ ॥

इति द्विस्वरपान्ताः ।

गुम्फो दोर्भूषणे दृब्धौ रेफोऽवद्यरवर्णयोः ।
शफं खुरे गवादीनां मूले विटपिनामपि ॥ ३०५ ॥
शिफा मातरि मांस्यां च जटायां च सरित्यपि ।
शोफ ओषधिभेदे स्याद्रुक्कृते त्वग्विवर्धने ॥ ३०६ ॥

इति द्विस्वरफान्ताः ।

कम्बिर्वंशलतादर्व्योः कम्बुर्वलयशङ्खयोः ।
गजे शम्बूके कर्चूरे ग्रीवायां नलकेऽपि च ॥ ३०७ ॥
जम्बूर्मेरुतरङ्गिण्यां द्वीपवृक्षविशेषयोः ।
डिम्ब एरण्डभययोर्विप्लुवे प्लीह्नि पुप्फुसे ॥ ३०८ ॥
बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले ।
शम्बः पवौ लोहकाञ्च्यां स्तम्ब आलानगुल्मयोः ॥३०९॥
व्रीह्यादीनां प्रकाण्डे च

इति द्विस्वरबान्ताः ।

कुम्भो वेश्यापतौ घटे ।
द्विपाङ्गे राक्षसे राशौ कुम्भं त्रिवृति गुग्गुलौ ॥ ३१० ॥
कुम्भुखायां पाटलायां वारिपर्ण्यां च कट्फले ।
गर्भः कुक्षौ शिशौ सन्धौ भ्रूणे पनसकण्टके ॥ ३११ ॥
मध्ये ग्रावपवरके जम्भः स्याद्दानवान्तरे ।
दन्तभोजनयोरंशे हनौ जम्बीरतूणयोः ॥ ३१२ ॥
जृम्भा जृम्भणे विकासे डिम्भो वैधेयबालयोः ।
दम्भः कल्के कैतवे च दर्भो ग्रन्थे कुशेऽपि च ॥ ३१३ ॥

१ शिल्यं । २ निद्राङ्ग ।

दृग्भूः पवौ भास्करे च नाभिः क्षत्रप्रधानयोः।
चक्रमध्ये मृगमदे प्राण्यङ्गे मुख्यराज्ञि च॥ ३१४॥
निभः स्यात्सदृशे व्याजे रम्भो वैणवदण्डके।
रम्भा त्रिदशभामिन्यां कदल्यां च विभुः प्रभौ॥ ३१५॥
व्यापके शङ्करे नित्ये शम्भुर्ब्रह्मार्हतोः शिवे।
शुभो योगे शुभं भद्रे शुभा कान्तीच्छयोर्मता॥ ३१६॥
स्तम्भोऽङ्गजाड्ये स्थूणायां सभा द्यूतसमूहयोः।
गोष्ठ्यां सभ्येषु शालायां स्वभूर्विष्णौ विधावपि॥ ३१७॥
स्तोभः स्यात्सामविच्छेदे हेलने स्तम्भनेऽपि च।

इति द्विस्वरभान्ताः।

आमोऽपक्के रोगभेदे रोगे चेध्मसामिद्भिदि॥ ३१८॥
कामे वसन्ते काष्ठे स्यादुमो नगरघट्टयोः।
उमा गौर्यां हरिद्रायां कीर्तिकान्त्यतसीष्वपि॥ ३१९॥
ऊर्मिः पीडाजवोत्कण्ठालखेप्रकाशवीचिषु।
वस्त्रसङ्कोचलेखायां क्रमः कल्पाऽङ्घ्रिशक्तिषु॥ ३२०॥
परिपाट्यां, क्षमः शक्ते हिते युक्ते क्षमावति।
क्षमा क्षान्तौ क्षितौ, कामं बाढेऽनुमतिरेतसोः॥ ३२१॥
कामः स्मरेच्छाकाम्येषु क्षुमा स्यान्नीलिकाऽतसी।
कृमिः कृमिर्वल्लाक्षायां कीटे, क्षेमस्तु मङ्गले॥ ३२२॥
लब्धसंरक्षणे मोक्षे क्षेमोमा धनहर्यपि।
क्षौमं स्यादतसीवस्त्रे दुकूलेऽट्टालकेऽपि च॥ ३२३॥
खर्मं क्षौमे पौरुषे च गमोऽध्वद्यूतभेदयोः।
सदृक्पाठेऽप्यथ ग्रामो वृन्दे शब्दादिपूर्वकः॥ ३२४॥
षड्जादौ संवसथे च गुल्मं सैन्योपरक्षणे।
रुक्सैन्यघट्टभेदेषु स्तम्बे, गुल्मी पटौकसि॥ ३२५॥
आमलक्येलयोर्वन्यामथ घर्मो निदाघवत्।
स्वेदाम्भस्यातपे ग्रीष्मोष्मणोर्जाल्मस्तु पामरे॥ ३२६॥

१ षु च। २ भङ्ग। ३ अंहि। ४ श्व। ५ रक्षणे च।

असमीक्ष्यकारिणि च जामिः स्वसृकुलस्त्रियोः ।
जिह्मस्तु कुटिले मन्दे जिह्मं तगरपादपे ॥ ३२७ ॥
तोक्मं कर्णमले, तोक्मो हरिते च हरिद्यवे ।
दमः स्यात्कर्दमे दण्डे दमने दमथेऽपि च ॥ ३२८ ॥
दस्मस्तु हव्यवाहे स्याद्यजमाने मलिम्लुचे ।
द्रुमस्तु पादपे पारिजाते किम्पुरुषेश्वरे ॥ ३२९ ॥
धर्मो यमोपमापुण्यस्वभावाचारधन्वसु ।
सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि ॥ ३३० ॥
धर्मं दानादिके, नेमस्त्वर्धे प्राकारगर्तयोः ।
अवधौ कैतवे काले नेमिः कूपत्रिका प्रधिः ॥ ३३१ ॥
तिनिशोऽरिष्टनेमिश्च पद्मो व्यूहे निधावहौ ।
संख्याऽब्जयोः पद्ममिभाबिन्दौ, ब्राह्मी तु भारती ॥३३२॥
शाकभेदः पङ्कगण्डी हिञ्जिका[1] सोमवल्लरी ।
ब्रह्मशक्तिर्भ्रमस्तु स्याद् भ्रमणे वारिनिर्गमे ॥ ३३३ ॥
भ्रान्तौ कुन्दाख्ययंत्रे च भामः क्रोधे रुचौ रवौ ।
भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे ॥ ३३४ ॥
भीष्मो रुद्रे च गाङ्गेये राक्षसे च भयङ्करे ।
भूमिः क्षितौ स्थानमात्रे भौमो मङ्गलदैत्ययोः ॥ ३३५ ॥
यमः काले च यमजेऽप्यहिंसादिषु पञ्चसु ।
संयमे यमने ध्वाङ्क्षे यामौ प्रहरसंयमौ ॥ ३३६ ॥
रमः कान्ते रक्ताशोके मन्मथे च रमा श्रियाम् ।
रश्मिर्घृणिप्रग्रहयो रामः श्यामे हलायुधे ॥ ३३७ ॥
पशुभेदे सिते चारौ राघवे रेणुकासुते ।
रामं तु वास्तुके कुष्ठे रामा हिङ्गुलिनीस्त्रियोः ॥ ३३८ ॥
रुक्मं लोहे सुवर्णे च रुमा तु लवणाकरे ।
सुग्रीवपत्न्यां, लक्ष्मीः श्रीशोभासम्पत्प्रियङ्गुषु ॥ ३३९ ॥

१ हंजिका । २ जल ।

वमिर्वान्तेऽनले, वामः कामे सव्ये पयोधरे ।
उमानाथे प्रतिकूले चारौ, वामा तु योषिति ॥ ३४० ॥
वामी शृगाल्यां करभीरासभीवडवासु च ।
शमी द्रुभेदे वल्गुल्यां शिम्ब्यां, श्यामोऽम्बुदे शितौ ॥ ३४१ ॥
हरिते प्रयागवटे कोकिले वृद्धदारके ।
श्यामं सैन्धवे मरिचे श्यामा सोमलतानिशोः ॥ ३४२ ॥
शारिवावल्गुनीगुन्द्रात्रिवृत्कृष्णाप्रियङ्गुषु ।
अप्रसूतस्त्रियां नील्यां श्रामो मण्डपकालयोः ॥ ३४३ ॥
शुष्ममोजसि सूर्ये च समं साध्वखिलं सदृक् ।
सीमा घाटे स्थितौ क्षेत्रे, सूक्ष्मोऽणौ, सूक्ष्ममल्पके ॥ ३४४ ॥
अध्यात्मे कतके, सोमस्त्वौषधीतद्रसेन्दुषु ।
दिव्यौषध्यां घनसारे समीरे पितृदैवते ॥ ३४५ ॥
वसुप्रभेदे सलिले वानरे किन्नरेश्वरे ।
हिमं तु सारे शीते च हिमश्चन्दनपादपे ॥ ३४६ ॥
होमिः सर्पिषि वन्हौ च

इति द्विस्वरमान्ताः ।

स्यादर्य्यः स्यामिवैश्ययोः ।
अर्थ्यं शिलार्जतुन्यर्थसम्प्रार्थे न्यायविज्ञयोः ॥ ३४७ ॥
अन्योऽसदृशेतरयोरन्त्यस्त्वन्तभवेऽधमे ।
अर्घ्यमर्घार्थमर्घार्हमास्यं मुखभवे मुखे ॥ ३४८ ॥
मुखान्तरास्या तु स्थित्यामार्यौ सज्जनसौविदौ ।
आर्योमाछन्दसोरिज्या दाने सङ्गेऽध्वरेऽर्चने ॥ ३४९ ॥
इभ्यो धनवतीभ्या तु करेण्वां सल्लकीतरौ ।
कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये ॥ ३५० ॥
कल्या कल्याणवाचि स्यात्कश्यं कशार्हमद्ययोः ।
अश्वमध्ये, क्षयो गेहे कल्पान्तेऽपचये रुजि ॥ ३५१ ॥

---

१ वाते । २ वल्गुनी ।
३ होमिः । ४ शिलाक्षुजन्यर्थ । ५ इभमुखे ।

कन्या नार्यां कुमार्यां च राश्योषधिविशेषयोः ।
कक्ष्या गृहप्रकोष्ठे स्यात्सादृश्योद्योगकाञ्चिषु ॥ ३५२ ॥
बृहतिकेभनाड्योश्च कार्यं हेतौ प्रयोजने ।
कायः कदैवते मूर्तौ सङ्घे लक्ष्मस्वभावयोः ॥ ३५३ ॥
कार्यं मनुष्यतीर्थे च काव्या स्यात्पूतनाधियोः ।
काव्यं ग्रन्थे, काव्यः शुक्रे, कांस्यं तैजसवाद्ययोः ॥३५४॥
पानपात्रे मानभेदे क्रिया करणचेष्टयोः ।
कर्मोपायचिकित्सासु निष्कृतौ सम्प्रधारणे ॥ ३५५ ॥
अर्चाप्रारम्भशिक्षासु कुल्यं तु कुलजेऽस्थनि ।
सूर्पाऽऽमिषाऽष्टद्रोर्णीषु कुल्या सरिति सारणौ ॥ ३५६ ॥
कृत्यो विद्विषि कार्ये च कृत्या स्याद्देवताक्रिया ।
गव्यं क्षीरादिके ज्यायां रागवस्तुनि गोहिते ॥ ३५७ ॥
गव्या गोवृन्दगव्यूत्योर्ग्राम्यो ग्रामभवे जने ।
ग्राम्यबन्धे रतेऽश्लीले गुह्यः कमठदम्भयोः ॥ ३५८ ॥
गुह्यमुपस्थे रहस्ये गृह्यं तु मलवर्त्मनि ।
गृह्योऽस्वैरिणि पक्ष्ये[1] च गृह्यासक्तमृगाण्डजे ॥ ३५९ ॥
गृह्या तु शाखा नगरे गेयौ गातव्यगायनौ ।
गोप्यौ दोसरगोप्तव्यौ चयः प्राकारपीठयोः ॥ ३६० ॥
समूहेऽप्यथ चव्या स्याच्चविकाशतपर्वणोः[2] ।
चित्यं मृतकचैत्ये स्याच्चित्या मृतचितावपि ॥ ३६१ ॥
चैत्यं जिनौकस्तद्बिम्बं चैत्यो जिनसभातरुः ।
उद्देशवृक्षश्चोद्यं तु प्रेर्ये प्रश्नेऽद्भुतेपि च ॥ ३६२ ॥
छाया पङ्क्तौ प्रतिमायामर्कयोषित्यनातपे ।
उत्कोचे पालने कान्तौ शोभायां च तमस्यपि ॥ ३६३ ॥
जयो जयन्ते विजये जयोमा तत्सखी तिथिः ।
पथ्या जयन्त्यग्निमन्थो जन्यो जामातृवत्सले ॥ ३६४ ॥
जनके जननीये च नवोढानुचरादिके[3] ।

१ पक्षे । २ पर्वयोः । ३ दिषु ।

जन्यं कौलीने युद्धयट्टे जन्या मातृसखीमुदोः ॥ ३६५ ॥
स्याज्जन्युर्जन्तुमात्रे च पावके परमेष्ठिनि ।
त्रयी त्रिवेद्यां त्रितये पुरन्ध्र्यां सुमतावपि ॥ ३६६ ॥
तार्क्ष्यस्तु स्यन्दने वाहे गरुडे गरुडाग्रजे ।
अश्वकर्णाह्वयतरौ स्यात्तार्क्ष्यं तु रसाञ्जने ॥ ३६७ ॥
तिष्यः पुष्यवत्कलौ भे तिष्या त्वामलकीतरौ ।
द्रव्यं भव्ये धने क्ष्मादौ जतुद्रुमविकारयोः ॥ ३६८ ॥
विनये भेषजे रीत्यां दस्युः प्रत्यर्थिचौरयोः ।
दायो दाने यौतकादिधने सोल्लुण्ठभाषणे ॥ ३६९ ॥
विभक्तव्यपितृद्रव्ये दिव्यं वल्गुलवङ्गयोः ।
द्युभवं दिव्यामलक्यां दूष्यं वाससि तद्गृहे ॥ ३७० ॥
दूषणीये चाऽथ दैत्योऽसुरे, दैत्या मुरौषधौ ।
धन्यः पुण्ययुते, धन्याऽऽमलक्यामुपमातरि ॥ ३७१ ॥
धान्यं तु व्रीहौ धान्याके धिष्ण्यं स्थानोडुवेश्मसु ।
बले, धिष्ण्योऽग्नौ शुक्रे च नयः स्यान्नैयमादिषु ॥ ३७२ ॥
नीतिद्यूतभिदोर्नाट्यं लास्ये तौर्यत्रिकेऽपि च ।
नित्यं ध्रुवे तते, पथ्यं हिते, पथ्या हरीतकी ॥ ३७३ ॥
पद्योऽन्त्यवर्णे स्यात्पद्यं श्लोके, पद्या तु वर्त्मनि ।
प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः ॥ ३७४ ॥
प्रियो वृद्ध्यौषधे हृद्ये पत्यौ, पुण्यं तु सुन्दरे ।
सुकृते पावने धर्मे पूज्यः श्वशुरवन्द्ययोः ॥ ३७५ ॥
पेयं पातव्यपयसोः पेया श्राणाच्छमण्डयोः ।
बल्यं रेतोबलकृतोर्भयं भीतौ भयङ्करे ॥ ३७६ ॥
कुब्जकपुष्पे, भव्यं तु फले योग्ये शुभेऽस्थनि ।
सत्ये भाविनि, भव्यस्तु कर्मरङ्गतरौ सति ॥ ३७७ ॥
भव्योमाकरिपिप्पल्योर्भाग्यं कर्म शुभाशुभम् ।
मध्यं न्याय्ये वलग्नेऽन्तर्मध्या दैत्योष्ट्रवेमराः ॥ ३७८ ॥

---

१ युद्धे । २ धन्याके । ३ धवे ।

मयुर्मृगाश्वमुखयोर्मन्युर्दैन्ये क्रतौ क्रुधि ।
माल्यं मालाकुसुमयोः स्यान्माया शाम्बरी कृपा ॥३७९॥
दम्भो बुद्धिश्च, मायस्तु पीताम्बरेऽम्बरेऽपि च ।
मूल्यं वस्ने वेतने च मयुर्यज्ञहये हये ॥ ३८० ॥
याम्या याच्यां भरण्यां च योग्यो योगार्हशक्तयोः ।
उपायिनि प्रवीणे च योग्यमृध्याह्वयौषधौ[१] ॥ ३८१ ॥
योग्याऽर्कयोषित्यभ्यासे रम्यश्चम्पकर्हद्वयोः[२] ।
रम्या रात्रावथ रथ्यो रथांशे रथवोढरि ॥ ३८२ ॥
रथ्या तु रथसङ्घाते प्रतोल्यां पथि चत्वरे ।
रूप्यमाहतहेमादौ रजते रूपवत्यपि ॥ ३८३ ॥
लयस्तूर्यत्रयीसाम्ये संश्लेषणविलासयोः[३] ।
लभ्यं लब्धव्ये युक्ते च विन्ध्यो व्याधाद्रिभेदयोः ॥३८४॥
विन्ध्या त्रुटौ लवल्यां च वीर्यं तेजःप्रभावयोः ।
शुक्रे शक्तौ च वीक्ष्यं तु द्रष्टव्ये विस्मयेऽपि च ॥ ३८५ ॥
वीक्ष्यस्तु लासके वाहे वेश्यं तु गणिकागृहे ।
वेश्या तु पण्ययोषायां शल्यः स्यान्मदनद्रुमे ॥ ४८६ ॥
नृपभेदे श्वाविधि च सीम्नि शस्त्रशलाकयोः ।
शय्या तल्पे शब्दगुम्फे शून्यं विन्दौ च निर्जने ॥ ४८७ ॥
शून्या तु नलिका, शौर्यमारभट्यां बलेऽपि च ।
सह्यमारोग्ये सोढव्ये, सह्योऽद्रौ, सव्यं दक्षिणे ॥ ३८८ ॥
वामे च प्रतिकूले च सत्यं तु शपथे कृते ।
तथ्ये तद्वति, सत्यस्तु लोकभित्, सङ्ख्यमाहवे ॥ ३८९ ॥
सङ्ख्यैकादौ विचारे च सन्ध्या कालनदीभिदोः ।
चिन्तायां संश्रवे सीम्नि सन्धाने कुसुमान्तरे ॥ ३९९ ॥
साध्यो योगे साधनीये गणदैवतभिद्यपि[४] ।
सायः शरेऽपराह्णे च स्थेयोऽक्षदक्पुरोधसोः ॥ ४०० ॥
सेव्यमुशीरे सेवार्हे सैन्यं सैनिकसेनयोः ।

१ ओषधे । २ रुच्ययोः । ३ विनाशयोः । ४ दैवत्य ।

सौम्यः सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवते ॥ ४०१ ॥
सौम्याः पुनर्मृगशिरःशिरःस्थाः पञ्च तारकाः।
हार्यः कलिद्रौ हर्तव्ये हृद्यं धवलजीरके ॥ ४०२ ॥
हृत्प्रिये हृद्धिते हृज्जे हृद्या तु वृद्धिभेषजे।
हृद्यस्तु वशकृन्मंत्रे--

इति द्विस्वरयान्ताः।

अग्रं पुरः प्रथमेऽधिके ॥ ४०३ ॥
उपर्यालम्बने श्रेष्ठे परिमाणे पलस्य च।
भिक्षाप्रकारे सङ्घाते प्रान्तेऽप्यद्रिस्तु पर्वते ॥ ४०४ ॥
सूर्ये शाखिनि, चाभ्रं तु त्रिदिवे गगनेऽम्बुदे।
अस्रः शिरसिजे कोणे स्यादस्रं शोणितेऽश्रुणि ॥ ४०५ ॥
अस्त्रं चापे प्रहरणेऽप्यङ्घ्रिः पादद्रुमूलयोः।
अरो जिने,ऽरं चक्राङ्गे शीघ्रशीघ्रगयोरपि ॥ ४०६ ॥
आरो नीतिः शनिर्भौम आरा चर्मप्रभेदिनी।
इराऽम्भोवाक्सुराभूमिष्विन्द्रः शक्रेऽन्तरात्मनि ॥ ४०७ ॥
आदित्ये योगभेदे च स्यादिन्द्रा तु फाणिज्जके।
उग्रः क्षत्रियतः शूद्रासूनावुत्कटरुद्रयोः ॥ ४०८ ॥
उग्रा वचाछिक्किकयोरुस्रा गत्रोपचित्रयोः।
उस्रो मयूखे, स्यादुष्ट्री मृद्भाण्डे करभस्त्रियाम् ॥ ४०९ ॥
ऐन्द्रिरिन्द्रसुते काकेऽप्योड्रा जनपदान्तरे।
ओड्रो जने जपावृक्षे करः प्रत्यायशुण्डयोः ॥ ४१० ॥
रश्मौ वर्षोपले पाणौ क्षरो मेघे क्षरं जले।
कद्रुः कनकपिङ्गे स्यात्कद्रूस्तु नागमातरि ॥ ४११ ॥
कारो बलौ वधे यत्ने हिमाद्रौ निश्चये यतौ।
कारा बन्धनशालायां बन्धे दूत्यां प्रसेवके ॥ ४१२ ॥
स्याद्धेमकारिकायां च क्षारः काचे रसे गुडे।
भस्मनि धूर्तलवणे कारिः शिल्पी क्रियाऽपि च ॥४१३॥

---

१ संधाने

कारुस्तु कारके शिल्पे विश्वकर्मणि शिल्पिनि ।
कीरः शुके जनपदे क्षीरं पानीयदुग्धयोः ॥ ४१४ ॥
क्षुरो गोक्षुरके कोकिलाक्षे छेदनवस्तुनि ।
क्षुद्रो दरिद्रे कृपणे निकृष्टेऽल्पनृशंसयोः ॥ ४१५ ॥
क्षुद्रा व्याघ्रीनटीव्यङ्गाबृहतीसरघासु च ।
चाङ्गेरिकायां हिंस्रायां मक्षिकामात्रवेश्ययोः ४१६ ॥
कुरुः[1] स्यादोदने भूपभेदे श्रीकण्ठजाङ्गले ।
क्रूरा नृशंसघोरोष्णकठिनाः, कृच्छ्रमंहसि ॥ ४१७ ॥
कष्टे सान्तपने, क्षेत्रं भारतादौ भगाङ्गयोः ।
केदारे सिद्धभूपत्न्योः क्रोष्ट्री क्षीरविदारिका ॥ ४१८ ॥
शृगालिका लाङ्गली च क्षौद्रं तु मधुनीरयोः ।
खरो रक्षोऽन्तरे तीक्ष्णे दुःस्पर्शे रासभेऽपि च ॥४१९
खरुः स्यादश्वहरयोर्दर्पदन्तासितेषु च ।
खुरः शफे कोलदले गरस्तूपविषे विषे ॥ ४२० ॥
रोगे, गरं स्यात्करणे गात्रमङ्गशरीरयोः ।
गजाग्रदेशेऽथ गिरिः पूज्येऽक्षिरुजि कन्दुके ॥ ४२१ ॥
शैले गैरेयके[2] गीर्णावपि, गुन्द्रस्तु तेजने ।
गुन्द्रा प्रियङ्गौ कैवर्तीमुस्तके भद्रमुस्तके ॥ ४२२ ॥
गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके ।
अलघौ दुर्जरे चापि गृध्रो गृध्नौ खगान्तरे ॥ ४२३ ॥
गोत्रं क्षेत्रेऽन्वये छत्रे सम्भाव्ये[3] बोधवर्त्मनोः ।
वने नाम्नि च, गोत्रोऽद्रौ, गोत्रा भुवि गवां गणे ॥४२
गौरः श्वेतेऽरुणे पीते विशुद्धे चन्द्रमस्यपि ।
विशदे, गौरं तु श्वेतसर्षपे पद्मकेसरे ॥ ४२५ ॥
गौर्युमानग्निकोर्वीषु प्रियङ्गौ वरुणास्त्रियाम् ।
रजन्यां रोचनीनद्योर्घस्रो वासरहिंस्रयोः ॥ ४२६ ॥
घोरो हरे दारुणे च चरः स्याज्जङ्गमे स्पशे ।

---

१ उत्तरे भूपभेदे । २ गिरियके । ३ संभाव्यबोध ।

चले[1] द्यूतप्रभेदे च चक्रं प्रहरणे गणे ॥ ४२७ ॥
कुलालाद्युपकरणे राष्ट्रे सैन्यरथाङ्गयोः ।
जलावर्ते छले[2], चक्रः कोके, चन्द्रोऽम्बुकाम्ययोः ॥४२८॥
स्वर्णे सुधांशौ कर्पूरे काम्पिल्ये मेचकेऽपि च ।
चरुर्हव्यान्ने भाण्डे च चारो बन्धावसर्पयोः ॥ ४२९ ॥
गतौ पियालवृक्षे च चित्रं खे तिलकेऽद्भुते ।
आलेख्ये कर्बुरे, चित्रा त्वाखुपर्णीसुभद्रयोः ॥ ४३० ॥
गोडुम्ब्यप्[3]सरसोर्दन्त्यां नक्षत्रोरगभेदयोः ।
चीरं वाससि चूडायां गोस्तने सीसपत्रके ॥ ४३१ ॥
चीरी कच्छाटिकाझिल्ल्योश्चक्रस्त्वम्लेऽम्लवेतसे ।
वृक्षाम्ले, चुक्री चाङ्गेर्यां चैत्रो मासाद्रिभेदयोः ॥ ४३२ ॥
चैत्रं मृतकचैत्ये च चौरो दस्युसुगन्धयोः ।
छत्रं स्यादातपत्राणे छत्रा मधुरिकौषधौ ॥ ४३३ ॥
धान्याके च शिलिन्ध्रे[4] च छिद्रं विवररन्ध्रवत् ।
गर्ते दोषे, जारस्तूपपतौ जार्योषधीभिदि ॥ ४३४ ॥
जीरस्त्वजाज्यां खड्गे च टारो लङ्गतुरङ्गयोः ।
तन्त्रं राष्ट्रे च सिद्धान्ते परच्छन्दप्रधानयोः ॥ ४३५ ॥
अगदे कुटुम्बकृत्ये तन्तुवाये परिच्छदे ।
श्रुतिशाखान्तरे शास्त्रे करणे ह्यर्थसाधके ॥ ४३६ ॥
इतिकर्तव्यतातन्त्वोस्तन्त्री स्याद्वल्लकीगुणे ।
अमृतायां च नद्यां च सिरायां वपुषोऽपि च ॥४३७॥
तरिर्दशायां नौकायां वस्त्रादीनां च पेटके ।
तन्द्री निद्रा प्रमीला च तारो निर्मलमौक्तिके ॥ ४३८ ॥
मुक्ताशुद्धावुच्चनादे नक्षत्रनेत्रमध्ययोः ।
तारं रूप्ये, तारा बुद्धदेव्यां सुरगुरुस्त्रियाम् ॥ ४३९ ॥
सुग्रीवपत्न्यां, ताम्रं तु शुल्बे शुल्बनिभेऽपि च ।

---

१ वले । २ दम्भे ।
३ गोडुम्बाप्सहयोः । ४ शिलीन्ध्रे । ५ वेडा ।

तीव्रं कटूष्णात्यर्थेषु तीव्रा तु कटुरोहिणी ॥ ४४० ॥
गण्डदूर्वा सुरी, तीरो वङ्गे, तीरं पुनस्तटे ।
तोत्रं वेणुके प्रतोदे दरः स्याद्भयगर्त्तयोः ॥ ४४१ ॥
दरी तु कन्दरे, दस्रः खरे, दस्रौ रवेः सुतौ ।
द्वारं निर्गमेऽभ्युपाये धरः कूर्माधिपे गिरौ ॥ ४४२ ॥
कार्पासे तूलेऽथ धरा मेदोभूमिजरायुषु ।
धारो जलधरासारवर्षणे स्यादृणेऽपि च ॥ ४४३ ॥
धारोत्कर्षे खड्गाद्यग्रे सैन्याग्रे वाजिनां गतौ ।
जलादिपाते सन्तत्यां धात्री भुव्युपमातरि ॥ ४४४ ॥
आमलक्यां जनन्यां च धीरो ज्ञे धैर्यसंयुते ॥
स्वैरे, धीरं तु घुसृणे नरो मर्त्येऽच्युतेऽर्जुने ॥ ४४५ ॥
नरं तु रामकर्पूरे नक्रं नासाग्रदारुणोः ।
नक्रो यादसि, नीध्रं[1] तु वलीकवननेमिषु ॥ ४४६ ॥
चन्द्रे च रेवतीभे च नेत्रं वस्त्रे मथोगुणे ।
मूलाक्षिनेतृषु, परो दूरान्यश्रेष्ठशत्रुषु ॥ ४४७ ॥
परं तु केवले, पत्रं यानं पक्षश्छदश्छुरी ।
पारं प्रान्ते परतटे पारी पूरपरागयोः ॥ ४४८ ॥
पात्र्यां कर्करिकायां च पादबन्धे च हस्तिनाम् ।
पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि ॥ ४४९ ॥
योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्त्तरि ।
पुरं शरीरे नगरे गृहपाटलिपुत्रयोः ॥ ४५० ॥
पुरस्तु गुग्गुलौ, पुण्ड्रं कृमौ दैत्येक्षुभेदयोः ।
वासन्त्यां तिलके पुण्डरीके, पुण्ड्रास्तु नीवृति ॥ ४५१ ॥
पुरुः पुरोगे प्रचुरे स्वर्लोकनृपभेदयोः ।
पूरः स्यादम्भसां वृद्धौ व्रणसंशुद्धिखाद्ययोः ॥ ४५२ ॥
पोत्रं वस्त्रे मुखाग्रे च सूकरस्य हलस्य च ।
पौरं कत्तृणे पुरजे बभ्रुः पिङ्गाग्निशूलिषु ॥ ४५३ ॥

---
१ नीवं ।

मुनौ विशाले नकुले विष्णौ, भद्रं तु मङ्गले ।
मुस्तकश्रेष्ठयोः साधौ काञ्चने करणान्तरे ॥ ४५४ ॥
भद्रो रामचरे हस्तिजातौ मेरुकदम्बके ।
गवि शम्भौ, भद्रा विष्टौ नभःसरिति कट्फले ॥ ४५५ ॥
कृष्णानन्तारास्नासु च भरोऽतिशयभारयोः ।
भरुर्भर्तृकनकयोर्भारो दशशतीद्वये ॥ ४५६ ॥
पलानां वीवधे चापि भीरुर्योषिति कातरे ।
भूरिः स्यात्प्रचुरे स्वर्णे मन्त्रो देवादिसाधने ॥ ४५७ ॥
वेदांशे गुप्तवादे च मरुः पर्वतदेशयोः ।
मारोऽनङ्गे मृतौ विघ्ने मारी चण्ड्यां जनक्षये ॥ ४५८ ॥
मात्रं त्ववधृतौ स्वार्थे कार्त्स्न्ये, मात्रा परिच्छदे ।
अक्षरावयवे द्रव्ये माल्येऽल्पे कर्णभूषणे ॥ ४५९ ॥
काले वृत्ते च मित्रं तु सख्यौ, मित्रो दिवाकरे ।
यन्त्रं देवाद्यधिष्ठाने पात्रभेदे नियन्त्रणे ॥ ४६० ॥
यात्रोत्सवे गतौ वृत्तौ, राष्ट्रमुत्पातनीवृतोः ।
रुरुर्दैत्ये मृगे, रंत्रं पीयूषपटवासयोः ॥ ४६१ ॥
रेतःसूतकयो, रोध्रो लोध्रे रोध्रद्रुमागसोः ।
रौद्रो भीष्मे रसे तीव्रे, रौद्री गौर्यां, वरो वृत्तौ ॥ ४६२ ॥
विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते ।
वरं तु घुसृणे किञ्चिदिष्टे, वरी शतावरी ॥ ४६३ ॥
वक्रं पुटभेदे, वक्रः कुटिले क्रूरभौमयोः ।
वक्त्रमास्ये छन्दसि च वप्रः प्राकाररोधसोः ॥ ४६४ ॥
क्षेत्रे ताते चये रेणौ वज्रं कुलिशहीरयोः ।
बालके वज्रा त्वमृता, वध्रः सीसवरत्रयोः ॥ ४६५ ॥
व्यग्रो व्यापृताकुलयोर्वारः सूर्यादिवासरे ।
महे स्वरावसरयोर्वृन्दे कुब्जाख्यपादपे ॥ ४६६ ॥
वारं तु मदिरापात्रे वारि ह्रीवेरनीरयोः ।

वारिर्घट्यां सरस्वत्यां वारी घटीभबन्धिनी ॥ ४६७ ॥
व्याघ्रः करञ्जे शार्दूले रक्तैरण्डतरावपि ।
श्रेष्ठे तूत्तरपदस्थः स्यात् व्याघ्री कण्टकारिका ॥ ४६८ ॥
वीरो जिने भटे श्रेष्ठे वीरं शृङ्गयां नतेऽपि च ।
वीरा गम्भारिकारम्भातामलक्येलवालुषु ॥ ४६९ ॥
मदिराक्षीरकाकोलीगोष्ठोदुम्बरिकासु च ।
पतिपुत्रवतीक्षीरविदारीदुग्धिकास्वपि ॥ ४७० ॥
वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिरौ ।
वेरं घुसृणवृन्ताकशरीरेषु, शरं जले ॥ ४७१ ॥
शरः पुनर्दधिसारे काण्डतेजनयोरपि ।
शक्रोऽर्जुनतराविन्द्रे कुटजे, शस्त्रमायुधे ॥ ४७२ ॥
लोहे, शस्त्री छुरिकायां, शद्रिर्जिष्णौ तडित्यपि ।
शरुः कोपे शरे वज्रे शारः शबलवातयोः ॥ ४७३ ॥
द्यूतस्य चोपकरणे शास्त्रं ग्रन्थनिदेशयोः ।
शारिः कुञ्जरपर्याणे शकुनौ द्यूतसाधने ॥ ४७४ ॥
शिग्रुः शोभाञ्जने शाके शीघ्रं चक्राङ्गतूर्णयोः ।
उशीरे, शुक्रस्तु शुक्रे ज्येष्ठमासेऽग्निकाव्ययोः ॥ ४७५ ॥
शुक्रं तु रेतोऽक्षिरुजोः शुभ्रं दीप्तेऽभ्रके सिते ।
शूरश्चारे भटे सूर्ये सरौ दध्यग्रसायकौ ॥ ४७६ ॥
स्वरः शब्देऽपि षड्जादौ सत्रमाच्छादने क्रतौ ।
सदा दाने वने वापि स्वरुः स्याद्यूपखण्डके ॥ ४७७ ॥
अध्वरे कुलिशे बाणे सारो मज्जास्थिरांशयोः ।
बले श्रेष्ठे च सारं तु द्रविणन्यायवारिषु ॥ ४७८ ॥
स्फारस्तु करकादीनां बुद्बुदे विपुलेऽपि च ।
स्थिरो मोक्षे निश्चले च स्थिरा भूः शालपर्ण्यपि ॥ ४७९॥
सिप्रः स्वेदे, सिप्रा नद्यां, सिरा नाड्यम्बुवाहिनी ।
सिरस्तु पिप्पलीमूलं सीरः स्यादंशुमालिनि ॥ ४८० ॥

१ गजबन्धनभुव्यपि । २ दम्भे इति पाठः ।

लाङ्गलेऽथ सुरो देवे, सुरा चषकमद्ययोः ।
सूत्रं तु सूचनाकारिग्रन्थे तन्तुव्यवस्थयोः ॥ ४८१ ॥
स्वैरो मन्दे स्वतन्त्रे च हरो नाशकरुद्रयोः ।
वैश्वानरेऽप्यथ हरिर्दिवाकरसमीरयोः ॥ ४८२ ॥
यमवासवसिंहांशुशशाङ्ककपिवाजिषु ।
पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु ॥ ४८३ ॥
लोकान्तरे च हारस्तु मुक्तादामनि संयुगे ।
हिंस्रः स्याद्घातुके, हिंस्रा मांसी काकादनी वसा ॥ ४८४ ॥
हीरो वज्रे हरे सर्पे हीरा पिपीलिकाश्रियोः ।
होरा तु लग्ने राश्यर्धे शास्त्ररेखाप्रभेदयोः ॥ ४८५ ॥

इति द्विस्वररान्ताः ।

अलिः सुरापुष्पलिहोरम्लो रसेऽम्लवेतसे ।
अम्ली चाङ्गेर्यामालं स्यादनलप्रहरितालयोः ॥ ४८६ ॥
आलिः सख्यावलीसेतुष्वनर्थे विशदाशये ।
आलुर्गलन्तिकायां स्यादालु भेलककन्दयोः ॥ ४८७ ॥
इलोर्वी वाग् बुधस्त्री गौः, कलं त्वजीर्णरेतसोः ।
अव्यक्तमधुरध्वाने कला स्यादंशशिल्पयोः ॥ ४८८ ॥
कलने मूलरैवृद्धौ षोडशांशे विधोरपि ।
कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि ॥ ४८९ ॥
कालः पुनः कृष्णवर्णे महाकालकृतान्तयोः ।
मरणाऽनेहसोः, काली कालिकाक्षीरकीटयोः ॥ ४९० ॥
मातृभेदोमयोर्नव्यमेघौघपरिवादयोः ।
काला कृष्णात्रिवृन्नील्योर्जुङ्ग्यां, कीलोऽग्नितेजसि ॥ ४९१ ॥
कफणिस्तम्भयोः शङ्कौ, कीला रतहतावपि ।
कुलं कुल्यगणे गेहे देहे जनपदेऽन्वये ॥ ४९२ ॥
कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि ।

१ रासभ । २ स्त्रियोः । ३ अनर्थ ।
४ सेत्वनर्थेष । ५ काल । ६ जिङ्गी ।

कोलो भेलक उत्सङ्गेऽङ्कपाल्यां चित्रके किरौ ॥ ४९३ ॥
कोलं तु बदरे, कोला पिप्पल्यां च विभेषजे ।
खलं कल्के भुवि स्थाने क्रूरे कर्णेजपेऽधमे ॥ ४९४ ॥
खल्लो निम्ने वस्त्रभेदे चर्मचातकपक्षिणोः ।
खल्ली तु हस्तपादावमर्दनाह्वयरुज्यपि ॥ ४९५ ॥
गलः कण्ठे सर्जरसे गोलः स्यात्सर्ववर्तुले ।
गोला पत्राञ्जने गोदावर्यां सख्यामलिञ्जरे ॥ ४९६ ॥
मण्डले च कुनट्यां च बालक्रीडनकाष्ठके ।
चिल्लः खगे, सचुल्लश्च पिल्लवत् क्लिन्नलोचने ॥ ४९७ ॥
क्लिन्नेऽक्ष्णि, चुल्ली तूद्धाने चेलं गर्हितवस्त्रयोः ।
चोलः कूर्पासके देशे चौलकर्मणि मुण्डने ॥ ४९८ ॥
छलं छद्मस्खलितयोश्छल्ली सन्तानवीरुधोः ।
वल्कले पुष्पभेदे च जलं गोकलने जडे ॥ ४९९ ॥
ह्रीवेरेऽम्बुनि, जालं तु गवाक्षे क्षारके गणे ।
दम्भानाययोश्च, जालो नीपे, जाली पटोलिका ॥ ५०० ॥
झला पुत्र्यामातपोर्म्यौ झिल्ली तूद्वर्त्तनांशके ।
वर्त्यातपरुचोश्चीर्यां तलं ज्याघातवारणे ॥ ५०१ ॥
तलश्चपेटे तालद्रौ स्वभावाधरयोः त्सरौ ।
तल्लो जलाधारभेदे तल्ली तु तरुणस्त्रियाम्[1] ॥ ५०२ ॥
तालः कालक्रियामाने हस्तमानद्रुभेदयोः ।
करास्फोटे करतले हरिताले त्सरावपि ॥ ५०३ ॥
तुला माने पलशते सादृश्ये राशिभाण्डयोः ।
गृहाणां दारुबन्धाय पीठ्यां, तूलं तु खे पिचौ ॥ ५०४ ॥
ब्रह्मदारुण्यथ दलं शस्त्रीछदेऽर्धपर्णयोः ।
उत्सेधवद्वस्तुनि च नलो राज्ञि कपौ नडे ॥ ५०५ ॥
पितृदैवेऽथ नलं स्यात्पद्मे, नली मनःशिला ।
नालं काण्डे मृणाले च नाली शाककदम्बयोः[2] ५०६ ॥

---

१ वरुणस्त्रियाम । २ कलम्बके ।

नीलो वर्णे मणौ शैले निधिवानरभेदयोः ।
नील्योषध्यां लाञ्छने च पलमुन्मानमांसयोः ॥ ५०७ ॥
पल्लिश्च ग्रामके कुड्यां[1] पालिर्यूकाश्रिपङ्क्तिषु ।
जातश्मश्रुस्त्रियां प्रान्ते सेतौ कल्पितभोजने ॥ ५०८ ॥
प्रशंसाकर्णलतयोरुत्सङ्गे प्रस्थचिन्हयोः ।
पीलुः पुष्पे द्रुमे काण्डे परमाणौ मतङ्गजे ॥ ५०९ ॥
तालास्थिखण्डे च, पुलः पुलके विपुलेऽपि च ।
फलं हेतुकृते जातीफले फलकसस्ययोः ॥ ५१० ॥
त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः ।
फली फलिन्यां, फलि तु वसने, फाल उत्प्लुतौ ॥५११॥
कुशके[2] च, बलं रूपे स्थामनि स्थौल्यसैन्ययोः ।
बोले, बलस्तु बलिनि काके दैत्ये हलायुधे ॥ ५१२ ॥
बला त्वोषधिभेदे स्यात्, बलिर्दैत्योपहारयोः ।
करे चामरदण्डे च गृहदारूदरांशयोः ॥ ५१३ ॥
त्वक्सङ्कोचे गन्धके च बालाऽऽज्ञेऽश्वेभपुच्छयोः ।
शिशौ ह्रीवेरकचयोर्बाला तु त्रुटियोषितोः ॥ ५१४ ॥
बाली भूषान्तरे मेधौ बिल उच्चैःश्रवोहये ।
बिलं रन्ध्रे गुहायां च भल्लं भल्लूकबाणयोः ॥ ५१५ ॥
भल्ली भल्लातके, भालं स्याल्ललाटे महस्यपि ।
भेलः प्लवे मुनिभेदे भीरौ बुद्धिविवर्जिते ॥ ५१६ ॥
मल्लः कपाले बलिनि मत्स्ये पात्रे, मलस्त्वघे ।
किट्टे कदर्ये विष्ठायां मालं तु कपटे वने ॥ ५१७ ॥
मालो जने स्यान्माला तु पङ्क्तौ पुष्पादिदामनि ।
मालुः स्त्रियां पत्रवल्यां मूलं पार्श्वाद्ययोरुडौ ॥ ५१८ ॥
निकुञ्जशिफयोः स्वीये शिलायां च वशीकृतौ ।
प्रतिष्ठायामथो मेला त्वञ्जने मेलकेऽपि च ५१९ ॥
मौलिः किरीटे धम्मिल्ले चूडाकङ्केलिमूर्द्धसु ।

---

१ कुड्यां । २ कुशिके ।

लीला केलिर्विलासश्च शृङ्गारभावजक्रिया ॥ ५२० ॥
लोलश्चले सतृष्णे च लोला तु रसनाश्रियोः ।
वल्ली स्यादजमोदायां लतायां कुसुमान्तरे ॥ ५२१ ॥
व्यालो दुष्टगजे सर्पे शठे श्वापदहिंस्रयोः ।
वेला बुधास्त्रियां काले सीमनीश्वरभोजने ॥ ५२२ ॥
अक्लिष्टमरणेऽम्भोधेस्तीरनीरविकारयोः ।
शालो हाले मत्स्यभेदे, शालौकस्तत्प्रदेशयोः ॥ ५२३ ॥
स्कन्धशाखायां, शालिस्तु गन्धोलौ[2] कलमादिषु ।
शालुः कषायद्रव्ये स्याच्चोरकाख्यौषधेऽपि च ॥५२४॥
शिलमुञ्छं, शिला द्वाराऽधोदारु कुनटी दृषत् ।
शिली गण्डूपदी, शीलं साधुवृत्तस्वभावयोः ॥ ५२५ ॥
शुक्लं रूप्ये, शुक्लो योगे श्वेते, शूलं रुगस्त्रयोः ।
योगे, शूला तु पण्यस्त्री वधहेतुश्च कीलकः ॥ ५२६ ॥
शैलो भूभृति, शैलं तु शैलेये तार्क्ष्यशैलके ।
सालः सर्ज्जतरौ वृक्षमात्रप्राकारयोरपि ॥ ५२७ ॥
स्थालं भाजनभेदे स्यात् स्थाली तु पाटलोखयोः ।
स्थूलः पीने जडे, हालः शालिवाहनपार्थिवे[3] ॥ ५२८ ॥
हाला सुरायां, हेला तु स्यादवज्ञाविलासयोः ।
होलिरालिङ्गने सूर्येऽपि-

इति द्विस्वरलान्ताः ।

अविर्मूषिककम्बले ॥ ५२९ ॥
मेषे रवौ पर्वते च स्यादूर्ध्वं तु समुच्छ्रिते ।
उपर्युन्नतयोः, कण्वो मुनौ, कण्वं तु कल्मषे ॥ ५३० ॥
क्षवः क्षुते राजिकायां कविः काव्यस्य कर्तरि ।
विचक्षणे दैत्यगुरौ स्यात् कवी तु खलीनके ॥ ५३१ ॥
किण्वं पापे सुराबीजे क्लीवोऽपौरुषषण्डयोः ।
खर्वह्रस्वौ न्यग्वामनौ ग्रीवे शिरोधितच्छिरे ॥ ५३२ ॥

---

१ सिंह । २ गन्धोनौ । ३ सातवाहन ।

छविस्तु रुचि शोभायां जवः स्याद्वेगवेगिनोः।
जवोण्ड्रपुष्पे, जिह्वा तु वाचि ज्वालारसज्ञयोः॥ ५३३॥
जीवः स्यात्त्रिदशाचार्ये द्रुमभेदे शरीरिणि।
जीवितेऽपि च, जीवा तु वचायां धनुषो गुणे॥५३४॥
शिञ्जिते क्षितिजीवन्त्योर्वृत्तौ, तत्त्वं परमात्मनि।
वाद्यभेदे स्वरूपे च द्रवो विद्रवनर्मणोः॥ ५३५॥
प्रद्रावे रसगत्योश्च द्वन्द्वः से, द्वन्द्वमाहवे।
रहस्ये मिथुने युग्मे दवदावौ वनानले॥ ५३६॥
वने, दर्वी फणान्तर्द्धौ दार्व्वी स्याद्देवदारुणि।
हरिद्राद्वितये चापि दिवं खे त्रिदिवे दिने॥ ५३७॥
देवं हृषीके, देवस्तु नृपतौ तोयदे सुरे।
देवी कृताभिषेकायां तेजनीपृक्कयोरपि॥ ५३८॥
धवो धूर्त्ते नरे पत्यौ द्रुभेदेऽथ ध्रुवो वटे।
वसुयोगभिदोः शम्भौ शङ्कावुत्तानपादजे॥ ५३९॥
स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः।
ध्रुवा मूर्वाशालिपर्ण्योः स्रुग्भेदे गीतभिद्यपि॥ ५४०॥
नवो नव्ये स्तुतौ, नीवी स्त्रीकटीवस्त्रबन्धने।
मूलद्रव्ये परिपणे, प्लवः प्लक्षे प्लुतौ कपौ॥ ५४१॥
शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः।
क्रमनिम्नमहीभागे कुलके जलवायसे॥ ५४२॥
जलान्तरे, प्लवं गन्धतृणे मुस्तकभिद्यपि।
पक्वं परिणते नाशाभिमुखे, पार्श्वमन्तिके॥ ५४३॥
कक्षाधोऽवयवे चक्रोपान्तपर्शुसमूहयोः।
प्राध्वं दूरपथे प्रह्वे बन्धे, पूर्वं तु पूर्वजे॥ ५४४॥
प्रागग्रे श्रुतिभेदे च भवः सत्ताप्तिजन्मसु।
रुद्रे श्रेयसि संसारे, भावोऽभिप्रायवस्तुनोः॥ ५४५॥
स्वभावजन्मसत्तात्मक्रियालीलाविभूतिषु।
चेष्टायोन्योर्बुधे जन्तौ शृङ्गारादेश्च कारणे॥ ५४६॥

शब्दप्रवृत्तिहेतौ च यवो धान्ये पृथक्कृतौ ।
यावोऽलक्के पाकभिदि रेवा मन्मथयोषिति ॥ ५४७ ॥
नील्यां मेखलकन्यायां लवः कालभिदि छिदि ।
विलासे रामजे लेशे जंपाकिञ्जल्कपक्ष्मणोः ॥५४८ ॥
गोपुच्छलोमस्वपि च लट्वा पक्षिकुसुम्भयोः ।
लघ्वी ह्रस्वाविवक्षायां प्रभेदे स्पन्दनस्य च ॥ ५४९ ॥
विश्वाः सुरेषु, विश्वं तु शुण्ठ्यां भुवनकृत्स्नयोः ।
विश्वा विषायां, शिवं तु मोक्षे क्षेमे सुखे जले ॥५५०॥
शिवो योगान्तरे वेदे गुग्गुलौ वालुके हरे ।
पुण्डरीकद्रुमे कीले, शिवा झाटामलोमयोः ॥५५१॥
फेरौ शम्यां पथ्याध्यात्र्योः, शिविर्भूर्जे नृपान्तरे ।
शुल्वं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ ॥ ५५२ ॥
सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः ।
पिशाचादावात्मभावे बले प्राणेषु जन्तुषु ॥ ५५३ ॥
सान्त्वं सामनि दाक्षिण्ये, स्रुवा मूर्वा स्रुवा स्रुचि ।
ह्वस्तु सप्ततन्तौ स्यान्निदेशाह्वानयोरपि ॥ ५५४ ॥

इति द्विस्वरवान्ताः ।

अंशो विभाजने प्रोक्त एकदेशेऽपि वस्तुनः ।
अंशुः सूत्रादिसूक्ष्मांशे किरणे चण्डदीधितौ ॥ ५५५ ॥
आशा ककुभि तृष्णायामाशु तु व्रीहिशीघ्रयोः ।
ईशः स्वामिनि रुद्रे च स्यादीशा हलदण्डके ॥ ५५६ ॥
कशा स्यादश्वताडन्यां रज्जौ मुखगणेऽपि च ।
काशस्तृणे रोगभेदे कीशो दिगम्बरे कपौ ॥ ५५७ ॥
कुशो रामसुते दर्भे पापिष्ठे योक्त्रमत्तयोः ।
कुशी लोहविकारे स्यात्, कुशा वल्गा, कुशं जले ॥५५८॥
केशः शिरसिजे पाशपाणौ ह्रीवेरदैत्ययोः ।
क्लेशो दुःखे च रागादौ कोशः कोष इवाण्डके ॥ ५५९ ॥

१ तथा ।

कुड्मले चषके दिव्येऽर्थचये योनिशिम्बयोः ।
जातीकोशेऽसिपिधाने दर्शः सूर्येन्दुसङ्गमे ॥ ५६० ॥
पक्षान्तेऽष्टौ दर्शने च दंशो वर्माणि मर्माणि ।
दोषे वनमक्षिकायां खण्डने भुजगक्षते ॥ ५६१ ॥
दशा वर्त्ताववस्थायां दशास्तु वसनाञ्चले ।
नाशः पलायने मृत्यौ परिध्वस्तावदर्शने ॥ ५६२ ॥
निशा रात्रौ हरिद्रायां पशुश्छागे मृगादिषु ।
प्रमथेऽपि च पाशस्तु मृगपक्षादिबन्धने ॥ ५६३ ॥
कर्णान्ते शोभनार्थः स्यात्कचान्ते निकरार्थकः ।
छात्राद्यन्ते च निन्दार्थः पेशी मांस्यसिकोशयोः ॥५६४॥
अण्डभेदे पलपिण्डे सुपक्वकणिकेऽपि च ।
भूस्पृग्वैश्ये मानवे च राशिर्मेषादिपुञ्जयोः ॥ ५६५ ॥
वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः ।
वशा नार्यां वन्ध्यगव्यां हस्तिन्यां दुहितर्यपि ॥ ५६६ ॥
वंशः सङ्घेऽन्वये वेणौ पृष्ठाद्यवयवेऽपि च ।
वेशो वेश्यागृहे गेहे नेपथ्ये च, शशः पशौ ॥ ५६७ ॥
वोलो लोध्रे नृभेदे च स्पशो हेरिकयुद्धयोः ।
स्पर्शो वर्गाक्षरे[1] दाने स्पर्शने स्पर्शके रुजि ॥ ५६८ ॥

इति द्विस्वरशान्ताः ।

अक्षो रथस्यावयवे व्यवहारे विभीतके ।
प्रासके[2] शकटे कर्षे ज्ञाने चाऽऽत्मनि रावणौ ॥ ५६९ ॥
अक्षं सौवर्चले तुत्थे हृषीके, स्यादुषा निशि ।
बाणपुत्र्यां च, ऋक्षस्तु स्यान्नक्षत्राच्छभल्लयोः ॥ ५७० ॥
महीधरविशेषे च शोणके क्षतवेधने ।
ऋषिर्वेदे मुनौ, कर्षः कर्षणे मानभिद्यपि ॥ ५७१ ॥
कक्षो वीरुधि दोर्मूले कच्छे शुष्कवने तृणे ।
पापे, कक्षा त्विभरज्जौ काञ्च्यां गेहप्रकोष्ठके ॥ ५७२ ॥

१ वर्गान्तरे । २ पासके ।

भित्तौ साम्ये रथभागेऽन्तरीयपश्चिमाञ्चले ।
उद्ग्राहिण्यां च, कर्षूस्तु तुषाग्नौ कृषिकुल्ययोः ॥ ५७३ ॥
घोषः कांस्ये स्वने गोपघोषकाभीरपल्लिषु ।
घोषा तु शतपुष्पायां चोक्षः सुन्दरगीतयोः ॥ ५७४ ॥
शुचौ, झषस्तु मकरे वने मीने, झषा पुनः ।
नागबलायां तुषस्तु धान्यत्वचि विभीतके ॥ ५७५ ॥
दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ ।
द्रुमे, दक्षा तु मेदिन्यां ध्वांक्षः काके बकेऽर्थिनि ॥५७६॥
गृहे, ध्वांक्षी तु काकोल्यां, न्यक्षः कार्त्स्न्यनिकृष्टयोः ।
जामदग्न्येऽपि, पक्षस्तु मासार्धे ग्रहसाध्ययोः ॥ ५७७ ॥
चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात्परश्चये ।
पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे ॥ ५७८ ॥
प्लक्षो द्वीपे गर्दभाण्डेऽश्वत्थे जटिनि पक्षके ।
प्रेक्षा धीरीक्षणं नृत्तं, प्रैषः प्रेषणपीडने ॥ ५७९ ॥
पौषो मासप्रभेदे स्यात्पौषं तु महयुद्धयोः ।
भिक्षा सेवाप्रार्थनयोर्भृतौ भिक्षितवस्तुनि ॥ ५८० ॥
माषो माने धान्यभेदे मूर्खे त्वग्दोषभिद्यपि ।
मिषं व्याजे स्पर्शभेदे मेषो राश्यन्तरे हुडौ ॥ ५८१ ॥
मोक्षो निःश्रेयसे वृक्षविशेषे मोचने मृतौ ।
यक्षः श्रीदे च गुह्ये च रक्षा रक्षणभस्मनोः ॥ ५८२ ॥
रूक्षोऽस्निग्धपरुषयोर्लक्षं व्याजशरव्ययोः ।
संख्यायामपि, वर्षस्तु समाद्वीपाब्दवृष्टिषु ॥ ५८३ ॥
वर्षधरेऽपि, वर्षास्तु प्रावृष्यथ विषं जले ।
क्ष्वेडे, विषा त्वतिविषा, वृषो गव्याखुधर्मयोः ॥ ५८४ ॥
पुंराशिभेदयोः शृङ्ग्यां वासके शुक्रलेऽपि च ।
श्रेष्ठे स्यादुत्तरस्थश्च वृषी तु ऋषिविष्टरे ॥ ५८५ ॥

वृषा वृत्राकपिकच्छ्वोः शुषिः शुषिरशोषयोः ।
शेषोऽनन्ते वधे सीरिण्युपयुक्तेतरेऽपि च ॥ ५८६ ॥
शेषा निर्माल्यदाने स्याच्छोषः शोषणयक्ष्मणोः ।
इति द्विस्वरषान्ताः ।
अंसं स्कन्धे विभागे स्यादासिः खड्ग नदीभिदि ॥५८७॥
अर्चिर्मयूखशिखयोरदात्रे च परत्र च ।
आगः स्यादेनोवद्घे मन्ता,त्वाशीर्हितैषिणि ॥ ५८८ ॥
उरगस्य च दंष्ट्रायामुषः सन्ध्याप्रभातयोः ।
उरो वक्षसि मुख्ये स्यादोजो दीप्तिप्रकाशयोः ॥ ५८९ ॥
अवष्टम्भे बले धातुतेजस्योकस्तु सद्मनि ।
ओकास्त्वाश्रयमात्रे स्यात् कंसस्तैजसमानयोः ॥ ५९० ॥
पानपात्रे दैत्यभेदे कारूः शक्त्यायुधे रुजि ।
बुद्धौ विकलवाचि स्याद् गुत्सः स्तम्बगुलच्छयोः ॥५९१॥
हारभेदे ग्रन्थिपर्णे, गोसो बोलविभातयोः ।
चास इक्षुपक्षिभिदोश्छन्दः पद्येच्छयोः श्रुतौ ॥ ५९२ ॥
ज्यायान् वृद्धे प्रशस्ये च ज्योतिर्वन्हिदिनेशयोः ।
प्रकाशे दृशि नक्षत्रे तपः कृच्छ्रादिकर्मणि ॥ ५९३ ॥
धर्मे लोकप्रभेदे च तपाः शिशिरमाघयोः ।
तमो राहौ गुणे पापे ध्वान्ते, तरो जवे बले ॥ ५९४ ॥
त्रासो भये मणिदोषे तेजस्त्विट्रेतसोर्बले ।
नवनीते प्रभावेऽग्नौ दासो धीवरभृत्ययोः ॥ ५९५ ॥
वृषले दानपात्रे च दासी भिद्यपि चेट्यपि ।
धनुः शरासने राशौ प्रियालद्रौ धनुर्धरे ॥ ५९६ ॥
नभो व्योम्नि, नभा घ्राणे बिसतन्तौ पतद्ग्रहे ।
प्रावृषि श्रावणे, नासा घोणा द्वारोऽध्वदारुणोः ॥५९७॥
पयः क्षीरे च नीरे च प्रसूरश्वा जनन्यपि ।
बर्हिः कुशेऽग्नौ, भासस्तु भासि गृध्रशकुन्तयोः ॥ ५९८ ॥
महस्तेजस्युत्सवे च मिसिर्मांस्यजमोदयोः ।

शतपुष्पामधुर्योश्च मृत्सा काशी सुमृत्तिका ॥ ५९९ ॥
रसः स्वादे जले वीर्ये शृङ्गारादौ विषे द्रवे।
बोले रोगे देहधातौ तिक्तादौ पारदेऽपि च ॥ ६०० ॥
रसा तु रसना पाठासल्लकीक्षितिकङ्गुषु।
रहो गुह्ये रते तत्त्वे, रजो रेणुपरागयोः ॥ ६०१ ॥
स्त्रीपुष्पे गुणभेदे च रासक्रीडासु गोदुहाम्।
भाषाशृङ्खलके, वत्सा पुत्रादिवर्षतर्णकाः ॥ ६०२ ॥
वयस्तारुण्यबाल्यादौ खगे, वर्चस्तु तेजसि।
गूथे रूपे, वसुस्त्वग्नौ देवभेदे नृपे रुचि ॥ ६०३ ॥
योक्त्रे शुल्के, वसु स्वर्णे रत्ने वृद्ध्यौषधौ धने।
वपुः शस्ताकृतौ देहे व्यासो मुनिप्रपञ्चयोः ॥ ६०४ ॥
वासो वेश्मन्यवस्थाने वासा स्यादटरूषके।
विद्वान् ज्ञात्मविदोः प्राज्ञे वेधा धातृज्ञविष्णुषु ॥ ६०५ ॥
शंसा वचसि वाञ्छायां शिरो मूर्धप्रधानयोः।
सेनाग्रभागे, श्रेयस्तु मङ्गले धर्मशस्तयोः ॥ ६०६ ॥
सहो बले ज्योतिषि च सहो हेमन्तमासयोः।
स्रोतः प्रवाहेन्द्रिययोर्हंसोऽर्के मत्सरेऽच्युते ॥ ६०७ ॥
खगाश्वयोगिमन्त्रादिभेदेषु परमात्मनि।
निर्लोभनृपतौ प्राणवाते श्रेष्ठेऽग्रतः स्थितः ॥ ६०८ ॥
हविः सर्पिषि होतव्ये हिंसा चौर्यादिके वधे।

इति द्विस्वरसान्ताः।

अहिः सर्पे वृते वप्रे स्यादीहोद्यमवाञ्छयोः ॥ ६०९ ॥
कुहूर्नष्टेन्दुदर्शे स्यात्क्वणिते कोकिलस्य च।
ग्रहो ग्रहणनिर्बन्धानुग्रहेषु रणोद्यमे ॥ ६१० ॥
उपरागे पूतनादावादित्यादौ विधुन्तुदे।
ग्राहो गृहे जलचरे, गुहः स्कन्दे, गुहा पुनः ॥ ६११ ॥

---

१ वासी। २ उरस्तुक्। ३ रुचौ।
४ वके। ५ स्वादौ। ६ मार्गयोः।

गह्वरे सिंहपुच्छ्यां च गृहा दारेषु सद्मनि ।
गौहो निपुणतर्के स्याद्गजाङ्घ्रिपर्वणोरपि ॥ ६१२ ॥
बर्हं[1] पर्णे परीवारे कलापे, बहु भूयसि ।
त्र्यादिकासु च संख्यासु, महावुत्सवतेजसी ॥ ६१३ ॥
मही भुवि नदीभेदे मोहो मूर्च्छाविपर्ययोः ।
लोहं कालायसे सर्वतैजसे जोङ्गकेऽपि च ॥ ६१४ ॥
वहो वृषस्कन्धदेशे वायौ, वाहोऽश्वमानयोः ।
वृषे, वाहा तु बाहौ स्याद् व्यूहो निर्माणतर्कयोः ॥६१५॥
समूहे बलविन्यासे सहः क्षमे बलेऽपि च ।
सहोर्व्यां सहदेवायां कुमार्यां नखभेषजे[2] ॥ ६१६ ॥
मुद्गपर्ण्यां च सिंहस्तु राशिभेदे मृगाधिपे ।
श्रेष्ठे स्यादुत्तरस्थश्च सिंही स्वर्भानुमातरि ॥ ६१७ ॥
वासाबृहत्योः क्षुद्रायां स्नेहः प्रेम्णि घृतादिके ।

इति द्विस्वरहान्ताः ।

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसङ्ग्रहे
द्विस्वरकाण्डो द्वितीयः ॥

अणुको निपुणेऽल्पे चाऽशोकौ कङ्केल्लिवञ्जुलौ ।
निःशोकपारदौ चाप्यशोका तु कटुरोहिणी ॥ १ ॥
अभीको निर्भये कम्रेऽप्यनीकं रणसैन्ययोः ।
अलीकमप्रिये भाले वितथेऽनूकमन्वये ॥ २ ॥
शीले,ऽनूको गतजन्मन्यंशुकं सूक्ष्म[3]वाससि ।
उत्तरीये वस्त्रमात्रेऽप्यलकाश्चूर्णकुन्तलाः ॥ ३ ॥
अलका तु कुबेरस्य नगर्या,मन्तिकं पुनः ।
पार्श्वे,ऽन्तिका तु चुल्ली स्यात्सातलाख्यौषधेऽपि च ॥ ४ ॥
नाट्योक्तौ ज्येष्ठभगिनी अत्तिका प्रोच्यतेऽपि सा ।
अलर्को नृपे[4] श्वेतार्के रोगो[5]न्मादितशुन्यपि ॥ ५ ॥

---

१ बर्हः । २ सह । ३ श्लक्ष्ण ।
४ नृपविशेषे इति पाठः । ५ योग ।

अम्बिकोमापाण्डुमात्रोर्देवताभिदि मातरि।
अम्धिका तु कैतवे स्याच्छर्वरीसिद्धयोरपि ॥ ६ ॥
अम्लिका तिन्तिडीकाम्लोद्गारचाङ्गेरिकासु च ।
आलोको दर्शने बन्दिभाषणोद्योतयोरपि ॥ ७ ॥
आनकः पटहे भेर्यां नदन्मेघमृदङ्गयोः ।
आतङ्को रुजि शङ्कायां सन्तापे मुरजध्वनौ ॥ ८ ॥
आह्निकं स्यात्पुनरहर्निर्वृत्त्ये नित्यकर्मणि ।
भोजने ग्रन्थभागे चाऽऽढकः प्रस्थचतुष्टयम् ॥ ९ ॥
आढकी तुवरीक्ष्वाकुः कटुतुम्ब्यां नृपान्तरे ।
स्यादुलूकः काकशत्राविन्द्रे भारतयोधिनि ॥ १० ॥
उष्णिका मृद्भाण्डभेदे करभस्य च योषिति ।
उदर्कस्तूत्तरकालफले मदनकण्टके ॥ ११ ॥
उष्णको घर्म उद्युक्तातुरयोरूर्मिका पुनः ।
उत्कण्ठायां भृङ्गनादे वस्त्रभङ्गेऽङ्गुलीयके ॥ १२ ॥
वीच्यां च कनकं हेम्नि कनको नागकेसरे ।
धत्तूरे चम्पके काञ्चनारकिंशुकयोरपि ॥ १३ ॥
करको दाडिमे पक्षिभेदे हस्ते कमण्डलौ ।
लट्वाकरञ्जयोर्मेघोपले च कटुकं कटु ॥ १४ ॥
कटुरोहिणी व्योषं च कञ्चुकश्चोलवर्मणोः ।
वर्द्धापकगृहीताङ्गवसने वारबाणके ॥ १५ ॥
निर्मोके, कटकस्त्वद्रिनितम्बे बाहुभूषणे ।
सेनायां राजधन्यां च क्रमुको भद्रमुस्तके ॥ १६ ॥
गुवाके पट्टिकालोध्रे कण्टकः क्षुद्रवैरिणि ।
वेणौ द्रुमाङ्गे रोमाञ्चे कलङ्कोऽङ्कापवादयोः ॥ १७ ॥
कालायसमले चापि कर्णिका कर्णभूषणे ।
बीजकोशे सरोजस्य करमध्याङ्गुलावपि ॥ १८ ॥

---

१ मिद्ध । २ ध्वनत । ३ करे । ४ करञ्ज ।

कुट्टिन्यां हस्तिहस्ताग्रे कर्णिका सूक्ष्मवस्तुनि ।
अग्निमन्थे, कामुकास्तु काम्यशोकातिमुक्तकाः ॥ १९ ॥
कारकं कर्तृकर्माद्योः कारिका यातना नटी ।
कृतौ विवरणश्लोके नापितादिककर्मणि ॥ २० ॥
काहृकः कुक्कुटे कोके पीतमुण्डेऽथ कार्मुकः ।
वंशे, कार्मुकमिष्वासे कमठे, क्षारको रसे ॥ २१ ॥
कारकं पक्षादिपाशे कालिका योगिनीभिदि ।
स्वर्णादिदोषे मेघाल्यां सुरागौर्योर्नवाम्बुदे ॥ २२ ॥
क्रमेदयवस्तुमूल्ये काष्ण्यवृश्चिकपत्रयोः ।
रोमाल्यां धूसरीक्षांस्योः काकीपटोलशाखयोः ॥ २३ ॥
किम्पाको वृक्षभिद्यज्ञे कीटको निष्ठुरे कृमौ ।
कीचको ध्वनिमद्वंशे दैत्यभेदे द्रुमान्तरे ॥ २४ ॥
कुलकं पञ्चादिश्लोकसमन्वये पटोलके ।
कुलकः कुलप्रधाने वल्मीके काकतिन्दुके ॥ २५ ॥
कुलिकस्तु कुलश्रेष्ठे नागद्रुमविशेषयोः ।
कुशिको मुनिभेदे स्यात्फाले सर्ज्जे विभीतके ॥ २६ ॥
क्षुल्लकः पामरे स्वल्पे कनिष्ठे दुःखिते[1] खले ।
कूपको गुणवृक्षे स्यात्तैलपात्रे ककुन्दरे ॥ २७ ॥
कूर्चिका[2] क्षीरविकृतौ कुञ्चिकायां च कुड्मले ।
आलेख्यकूर्चिकासूच्योः कृषकौ फालकर्षकौ ॥ २८ ॥
कोरकं कुड्मले तु स्यात्कक्कोलकमृणालयोः ।
कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ॥ २९ ॥
पारम्पर्यागते[3]स्थाने मङ्गलोद्वाहसूत्रयोः ।
गीतादौ भोगकाले च कौशिकः शक्रघूकयोः ॥ ३० ॥
कोशज्ञे गुग्गुलावाहितुण्डिके नकुले मुनौ ।
कौशिकी चण्डिकानद्योः खनकः सन्धितस्करे ॥ ३१ ॥

१ दुःस्थिते । २ कुचिका । ३ ख्याते ।

मूषके भूमिवित्तज्ञे खट्टिको[1] मांसविक्रयी ।
महिषीक्षीरफेनश्च खुल्लकः स्वल्पनीचयोः ॥ ३२ ॥
खोलकः पूगकोशे स्याच्छिरस्त्रे नाकुपाकयोः ।
ग्रन्थिकं पिप्पलीमूले ग्रन्थिपर्णकभेषजे ॥ ३३ ॥
ग्रन्थिको गुग्गुलौ देवज्ञे माद्रेयकरीरयोः ।
गण्डको विघ्ने विद्यायां संख्यावच्छेदखड्गिषु ॥ ३४ ॥
गण्डकी तु सरिद्भेदे गणको ग्रहवेदिनि ।
गणिकेभ्यां यूथिकायां तर्कार्यां पण्ययोषिति ॥ ३५ ॥
ग्राहको[2] ग्रहीतरि स्याद् व्याधानां घातिपक्षिणि ।
गान्धिको लेखके गन्धवणिजे, गुण्डकं पुनः ॥ ३६ ॥
कलोक्तौ मलिने धूलौ स्नेहपात्रेऽथ गैरिकम् ।
स्वर्णे धातौ, गोलकस्तु जारतो विधवासुते ॥ ३७ ॥
अलिञ्जरे गुडे चापि गोरङ्कुर्नग्नवेदिनोः[3] ।
खगे च, चषको मद्ये सरके मद्यभाजने ॥ ३८ ॥
चुलकः प्रसृतौ भाण्डप्रभेदे चुलुको यथा ।
चारकोऽश्वादिपाले स्याद्बन्धे संचारकेऽपि च ॥ ३९ ॥
चित्रकं चित्रकमये[4] द्रुमौषधिविशेषयोः ।
चुम्बकः कामुके धूर्ते बहुगुर्वश्मभेदयोः ॥ ४० ॥
चुल्लकी[5] कुण्डिकाभेदे शिशुमारे कुलान्तरे ।
चूतकः कूप आम्रे च चूलिका नाटकान्तरे ॥ ४१ ॥
करिणः कर्णमूले च जनकः पितृभूपयोः ।
जम्बुको वरुणे फेरौ जतुकं हिङ्गुलाक्षयोः ॥ ४२ ॥
जतुका च चर्मचटिका[6] जीवको वृद्धिजीविनि ।
क्षपणे प्राणके पीतसालसेवकयोर्द्रुमे ॥ ४३ ॥
व्यालग्राहे, जीविका तु जीवन्त्यां वर्तनेऽपि च ।
झिल्लीका झिल्लिकेव स्याच्चीर्यां रुच्यातपस्य च ॥ ४४ ॥

---

१ खदिको । २ ग्रहिको । ३ लग्नवन्दिनोः ।
४ चित्रकाये । ५ चुलुकी । ६ चटका ।

विलेपनस्य च मले तक्षकस्तक्ष्णि पन्नगे ।
द्रुमभेदे, तण्डकस्तु समस्तपदजातके ॥ ४५ ॥
तरुस्कन्धे वेश्मदारुमायाबहुलयोरपि ।
फेनखञ्जनयोश्चापि तारकः कर्णधारके ॥ ४६ ॥
दैत्ये च, तारकमुडौ नेत्रतन्मध्ययोरपि ।
तिलकोऽश्वद्रुमभिदोः पुण्ड्रके तिलकालके ॥ ४७ ॥
तिलकं रुचके क्लोम्नि त्रिशङ्कुः शलभे नृपे ।
मार्जारे च तुरुष्कस्तु देशे श्रीवाससिह्लयोः ॥ ४८ ॥
तूलिका तूलशय्या स्यादालेरव्यस्य च लेखनी ।
दर्शको दर्शयितरि प्रतीहारप्रवीणयोः ॥ ४९ ॥
द्रावकस्तु शिलाभेदे स्याद्धोषक[2]विदग्धयोः ।
दारको भेदके पुत्रे दीपकः स्यादलङ्कृतिः ॥ ५० ॥
दीपकौ दीप्तिकृद्दीपौ दीप्यकं त्वजमोदके ।
मयूरशिखायवान्योर्धनिको धान्यके धवे ॥ ५१ ॥
धनाढ्ये, धनिका वध्वां धेनुका धेनुरि[3]त्यपि ।
धैनुकं धेनुसंहत्यां करणेऽपि च योषिताम् ॥ ५२ ॥
नरकौ दैत्यनिरयौ नन्दकः कुलपालके ।
हर्षके विष्णुखड्गे च नर्तकः केलके नटे ॥ ५३ ॥
द्विपे पोटगले चापि नर्तकी लासिका द्विपी ।
नालीकोऽ[4]ङ्ग शरे शल्ये नालीकं पद्मतद्वने ॥ ५४ ॥
नायको मणिभिन्नेतृप्रधानेष्वथ नालिका ।
ना[5]ले काले चूर्णरन्ध्रे विवरे वेणुभाजने ॥ ५५ ॥
निपाकः पचने स्वेदासत्कर्मफलयोरपि ।
निर्मोको व्योम्नि सन्नाहे मोक्षके सर्पकञ्चुके ॥ ५६ ॥
नीलिका नीलिनीक्षुद्ररोगशेफालिकास्वपि ।
पराकस्तु व्रते खड्गे प्रसेकः सेचने च्युतौ ॥ ५७ ॥

---

१ बकुल । २ व्याषक । ३ इभ्यपि । ४ ऽब्जे । ५ ताले ।

पर्यङ्को मञ्चपर्यस्त्योः प्रतीकोऽङ्गप्रतीपयोः ।
पद्मकं पद्मकाष्ठेभबिन्दुजालकयोरपि ॥ ५८ ॥
पक्षकस्तु पार्श्वद्वारे पार्श्वमात्रेऽपि कथ्यते ।
पताकाङ्कध्वजे केतौ सौभाग्ये नाटकांशके ॥ ५९ ॥
पातुको जलमातङ्गे पतयालुप्रपातयोः ।
प्राणको जीवकतरौ सत्त्वजातीयबालयोः ॥ ६० ॥
पाटको रोधसि ग्रामैकदेशेऽक्षादिपातके ।
वाद्यभेदे महाकिष्कौ मूलस्यावयवेऽपि च ॥ ६१ ॥
पालकं शाकभेदे स्यात्सल्लक्यां वाजिपक्षिणि ।
पावकोऽग्नौ सदाचारे वह्निमन्थे च चित्रके ॥ ६२ ॥
भल्लातके विडङ्गे च शोधयितृनरेऽपि च ।
पिनाकः शिवकोदण्डे पांशुवृष्टित्रिशूलयोः ॥ ६३ ॥
प्रियकस्तु चञ्चरीके नीपे काश्मीरजन्मनि ।
प्रियङ्गौ चित्रहरिणे पीतशालतरावपि ॥ ६४ ॥
पिटकः स्यात्तु विस्फोटे मञ्जूषायामपीष्यते ।
पिष्टको नेत्ररोगे स्याद्धान्यादिचमसेऽपि च ॥ ६५ ॥
पिण्याकः कुङ्कुमे हिङ्गौ सिह्लके तिलचूर्णके ।
पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे ॥ ६६ ॥
असुराज्यां मणिदोषे गल्वर्के तालके कृमौ ।
पुलाको भक्तसिक्थे स्यात्संक्षेपासारधान्ययोः ॥ ६७ ॥
पुष्पकं मृत्तिकाङ्गारशकट्यां रत्नकङ्कणे ।
कासीसे श्रीदविमाने नेत्ररोगे रसाञ्जने ॥ ६८ ॥
लोहकांस्ये रीतिकायां पुत्रकः शरभे शठे ।
शैवे वृक्षप्रभेदे च पुत्रिका यावतूलिके ॥ ६९ ॥
पाञ्चालिकादुहित्रोश्च पूर्णकः स्वर्णचूडके ।
पूर्णिका नासिकाछिन्न्यां पृथुकश्चिपिटेऽर्भके ॥ ७० ॥
पृदाकुश्चित्रकव्याघ्रवृश्चिकेषु सरीसृपे ।

---

१ अपचये । २ प्राजि-पाजि ।



पेचकः करिलाङ्गूलमूले घूकेऽथ पेटकः ॥ ७१ ॥
मञ्जूषायां समूहे च बहुको जलखातके।
दात्यूहे कर्कटेऽर्के च बन्धूकः पीतसालके ॥ ७२ ॥
बन्धुजीवे, बन्धकस्तु सत्यकारेऽथ बन्धकी।
स्वैरिण्यां च करिण्यां च बालिका कर्णभूषणे ॥ ७३ ॥
पिछोलायां वालुकायां बालायां, बालकः पुनः।
शिशौ मूर्खेऽश्वगजयोर्वालधौ, भस्मकं रुजि ॥ ७४ ॥
विडङ्गे कलधौते च भ्रामकः फेरुधूर्त्तयोः।
सूर्यावर्तेऽश्मभेदे च भालाङ्कः कच्छपे हरे ॥ ७५ ॥
महालक्षणसम्पूर्णे पूरुषे करपत्रके।
रोहिते शाकभेदे च भूतीकं कट्फलौषधौ ॥ ७६ ॥
यवान्यां घनसारे च भूनिम्बे भूस्तृणेऽपि च।
भूमिका तु रचनायां रूपान्तरपरिग्रहे ॥ ७७ ॥
मशकः क्षुद्ररुग्जन्तुभेदयोर्मधुकं त्रपुः।
मधुयष्टिश्च, मधुको बन्दिश्रीवदपक्षिणोः ॥ ७८ ॥
मण्डूकी मण्डूकपर्ण्यां मण्डूकौ भेकशोणकौ।
मल्लिको हंसभेदे स्यान्मल्लिका कुसुमान्तरे ॥ ७९ ॥
मीने मृत्पात्रभेदे च मातृका करणेश्वरे।
मातृवर्णसमाम्नायोपमातृष्वथ मालिका ॥ ८० ॥
पक्षिमल्ले सरिद्भेदे ग्रैवेये पुष्पदामनि।
मामकं तु मदीये स्यान्मामको मातुले स्मृतः ॥ ८१ ॥
मेचकः श्यामले कृष्णे तिमिरे बर्हिचन्द्रके।
मोचको मोक्तृकदलीशिग्रुद्रुमविरागिषु ॥ ८२ ॥
मोदको हर्षुके खाद्ये यमको यमजे व्रते।
यमकं वागलङ्कारे याजको राजकुञ्जरे ॥ ८३ ॥
याज्ञिके च, युतकं तु यौतके युग्मयुक्तयोः।
संशये चलनाग्रे स्त्रीवस्त्रभेदे पटाञ्चले ॥ ८४ ॥

१ खादके। २ मोक्ष।

इति त्रिस्वरधान्ताः।

रजकौ धावकौ शुक्रौ रसिका कटिसूत्रके।
रसनायां रसालायां रल्लकः कम्बले स्मृतः ॥ ८५ ॥
तथैव कम्बलमृगे रात्रकं पञ्चरात्रके।
रात्रकस्तु प[1]ण्यवधूगृहान्तर्वर्षवासिनि ॥ ८६ ॥
राजिका पङ्क्तौ रेखायां केदारे राजसर्षपे।
रुचकं तु मातु[2]लिङ्गे निष्के सौवर्चलेऽपि च ॥ ८७ ॥
रोचनायां विडङ्गे च मङ्गलद्रव्यदन्तयोः।
अश्वस्याभरणे माल्ये प्रोत्कटेऽपि प्रकीर्तितः ॥ ८८ ॥
रूपकं नाटके प्रोक्तं[3] काव्यालङ्कारधूर्त्तयोः।
रेणुका तु हरेण्वां स्याज्जमदग्नेश्च योषिति ॥ ८९ ॥
लम्पाको लम्पटे देशे लासकौ केकिनर्तकौ।
लूनकस्तु पशौ भिन्ने लोचको नीलवाससि ॥ ९० ॥
कज्जले मांसपिण्डेऽक्षितारे स्त्रीभालभूषणे।
निर्बुद्धौ कर्णिकामोचाज्याम्बुभ्रूश्ल[4]थचर्मणि ॥ ९१ ॥
वराकः शोच्यरणयोर्वर्तकोऽश्वखुरे खगे।
वञ्चको जम्बुके गेहनकुले खलधूर्तयोः ॥ ९२ ॥
वल्मीको नाकुवालिमक्यो रोगभेदेऽथ वर्णकः।
विलेपने मलयजे चारणे, वसुकं पुनः ॥ ९३ ॥
रोमके, वसुकस्तु स्याच्छिवमल्ल्यर्कपर्णयोः।
व्यलीकं व्यङ्ग्यवैलक्ष्याप्रियाकार्येषु पीडने ॥ ९४ ॥
वार्षिकं त्रायमाणायां वर्षाभवेऽथ वाल्हिकः।
देशभेदेऽश्वभेदे च वाल्हिकं हिङ्गु कुङ्कुमम् ॥ ९५ ॥
वाल्हीकवद्वार्द्धकं तु वृद्धत्वे वृद्धकर्मणि।
वृद्धानां समवाये च वालुकं हरिवालुके ॥ ९६ ॥
वालुका तु सिकतासु वितर्कः संशयोहयोः।
विपाकः परिणामे स्याद् दुर्गतिस्वादुनोरपि ॥ ९७ ॥

---

१ पण। २ मातुलुङ्गे।
३ नाटकाद्येषु। ४ प्रश्लथ।

विवेकः पुनरेकान्ते जलद्रोणीविचारयोः ।
वृषाङ्कः साधुभल्लातशङ्करेषु महल्लके ॥ ९८ ॥
वृश्चिकस्तु द्रुणे राशावौषधे शूककीटके ।
वैजिकं कारणे शिग्रुतैले च, वैजिकोऽङ्कुरे ॥ ९९ ॥
शङ्खकं वलये कम्बौ शङ्खकस्तु शिरोरुजि ।
शम्याकस्तु[1] विपाके स्याद्याचके चतुरङ्गुले ॥ १०० ॥
शम्बूको दैत्यविशेषे करिकुम्भान्तशङ्खयोः ।
शलाका शारिका शल्यः श्वाविद्रालेख्यकूर्चिका ॥ १०१ ॥
छत्रपञ्जरकाष्ठीषु[2] शल्लकी श्वाविधि द्रुमे ।
शार्ककः स्याद् दुग्धफेने शर्करायाश्च पिण्डके ॥ १०२ ॥
शिशुकः पादपे बाले शिशुमारेऽथ शीतकः ।
शीतकालेऽलसे स्वस्थे शूककः प्रावटे रसे ॥ १०३ ॥
स्वस्तिको मङ्गलद्रव्ये गृहभेदचतुष्कयोः ।
स्यमीकः पादपे नाकौ स्यात् स्यमीका तु नीलिका ॥१०४॥
सरको मदिरापात्रे मदिरापानमद्ययोः ।
सस्यको नालिकेरान्तः सस्याकमणिखड्गयोः[3] ॥ १०५ ॥
सम्पर्कः सुरते पृक्तौ सायको बाणखड्गयोः
स्थासको हस्तबिम्बे स्यात्कर्कादेश्च[4] बुद्बुदे ॥ १०६ ॥
सूतकं जन्मनि रसे सूचकः शुनि दुर्ज्जने ।
कथके सीवनद्रव्ये मार्जारे वायसेऽपि च ॥ १०७ ॥
सृदाकूर्वज्रे दावाग्नौ प्रतिसूर्ये समीरणे ।
सेवकोऽनुगे प्रसेवे सेचकः सेक्तृमेघयोः ॥ १०८ ॥
हारको गद्यविज्ञानभिदोः कितवचौरयोः ।
हुडुक्को मदमत्ते स्याद्दात्यूहे वाद्यभिद्यपि ॥ १०९ ॥
हेरुकस्तु महाकालगणबुद्धविशेषयोः ।

इति त्रिस्वरकान्ताः ।

गोमुखं वाद्यभाण्डे स्याल्लेपने कुटिलौकसि ॥ ११० ॥

१ शम्पाक । २ च । ३ सहाभ । ४ करकोदश्च ।

त्रिशिखो रक्ष,स्त्रिशिखं स्यात्किरीटत्रिशूलयोः ।
दुर्मुखो मुखरे नागराजे वाजिनि वानरे ॥ १११ ॥
प्रमुखं प्रथमे मुख्ये मयूखा ज्वालरुक्त्विषः ।
विशिखा खनित्रिकायां रथ्यायां, विशिखः शरे ॥ ११२ ॥
विशाखो याचके स्कन्दे विशाखा भे कठिल्लके ।
वैशाखः खजके मासे सुमुखो गरुडात्मजे ॥ ११३ ॥
पण्डिते फणिभेदे स्यात्

इति त्रिस्वरखान्ताः ।

अयोगः कठिनोद्यमे ।
विश्लेषे विधुरे कूटेऽपाङ्गो नेत्रान्तपुण्ड्रयोः ॥ ११४ ॥
अङ्गहीनेऽप्यनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे ।
आभोगः परिपूर्णत्वे वरुणच्छत्रयत्नयोः ॥ ११५ ॥
आयोगो गन्धमाल्योपहारे व्यापृतिरोधयोः ।
आशुगोऽर्के शरे वायावुत्सर्गस्त्यागदानयोः ॥ ११६ ॥
वर्जने सामान्यविधावुद्वेगं पूगिकाफले ।
उद्वेगस्तूद्विजने स्यात्स्तिमिते शीघ्रगामिनि ॥ ११७ ॥
उद्वाहे च भयेऽपि स्यात् कलिङ्गो नीवृदन्तरे ।
पूतीकरञ्जे धूम्याटे स्यात्कलिङ्गा नितम्बिनी ॥ ११८ ॥
कलिङ्गं कौटजफले कालिङ्गस्तु भुजङ्गमे ।
द्विरदे भूमिकर्कारौ कालिङ्गी राजकर्कटी ॥ ११९ ॥
चक्राङ्गः श्वेतगरुति चक्राङ्गी कटुरोहिणी ।
जिह्मगो मन्दगे सर्पे तुरगो वाजिचित्तयोः ॥ १२० ॥
तुरगी त्वश्वगन्धायां धाराङ्गः खड्गतीर्थयोः[1] ।
नरङ्गः शेफे वरण्डे नारङ्गं विटजन्मिनोः ॥ १२१ ॥
कणारसे नागरङ्गे निषङ्गस्तूणखड्गयोः ।
निसर्गः सृष्टौ स्वभावे नीलङ्गुः कृमिजातिके ॥ १२२ ॥
भम्भरालयां प्रसूने च प्लवगः कपिभेकयोः ।

---

१ तीर्थखड्गयोः ।

अर्कसूते, पन्नगस्तु पद्मकाष्ठे भुजङ्गमे ॥ १२३ ॥
परागश्चन्दने रेणौ गिरौ ख्यातिपरागयोः ।
स्नानीयपुष्परजसोः पतङ्गः सूर्यपक्षिणोः ॥ १२४ ॥
पारदे शलभे शालौ पत्राङ्गं रक्तचन्दने ।
भूर्जपद्मकयोश्चापि प्रयागो वाजिशक्रयोः ॥ १२५ ॥
यज्ञे तीर्थविशेषे च प्रयोगस्तु निदर्शने ।
कार्मणे च प्रयुक्तौ च प्रियङ्गू राजसर्षपे ॥ १२६ ॥
पिपल्यां फलिनीकङ्ग्वोः पुन्नागः पादपान्तरे ।
जातीफले नरश्रेष्ठे भुजङ्गः सर्पषिङ्गयोः ॥ १२७ ॥
मातङ्गः श्वपचो हस्ती मृदङ्गो घोषवाद्ययोः ।
रक्ताङ्गो भौमे, रक्ताङ्गं कम्पिल्ये विद्रुमेऽपि च ॥ १२८ ॥
रक्ताङ्गा जीवन्तिकायां रथाङ्गः कोकपक्षिणि ।
रथाङ्गं चक्रे, वराङ्गं योनौ शीर्षे गुडत्वचि ॥ १२९ ॥
कुञ्जरं च विडङ्गस्तु स्यादभिज्ञकृमिघ्नयोः ।
विसर्गो विसर्जनीये वर्चसि त्यागदानयोः ॥ १३० ॥
सम्भोगो भोगरतयोः शुण्डायां, सर्वगं जले ।
सर्वगस्तु विभौ रुद्रे सारङ्गो विहगान्तरे ॥ १३१ ॥
चातके चञ्चरीके च द्विपैणशबलेषु च ।

इति त्रिस्वरगान्ताः ।

अनघः स्याद्गतपापे मनोज्ञे निर्मलेऽपि च ॥ १३२ ॥
अमोघः सफलेऽमोघा पुनः पथ्याविडङ्गयोः ।
उल्लाघो निपुणे हृष्टे शुचिनीरोगयोरपि ॥ १३३ ॥
काचिघस्तु मूषिके स्याच्छातकुम्भे छमण्डके ।
परिघोऽस्त्रे योगभेदे परिघातेऽर्गलेऽपि च ॥ १३४ ॥
पलघः काचकलशे घटे प्राकारगोपुरे ।
प्रतिघौ रुट्प्रतीघातौ महार्घो लावकाण्डजे ॥ १३५ ॥
महामूल्येऽपि—

इति त्रिस्वरघान्ताः ।

अवीचिस्तु तरङ्गे नरकान्तरे ।
कवचस्तु तनुत्राणे पटहे नन्दिपादपे ॥ १३६ ॥
क्रकचः करपत्रे स्याद्ग्रन्थिलाख्यतरावपि ।
कर्णीचिः पुष्पितलतागुञ्जयोः शकटेऽपि च ॥ १३७ ॥
नमुचिर्दितिजे कामे नाराचो लोहसायके ।
जलेभे, नाराच्येषण्यां प्रपञ्चो विप्रलम्भने ॥ १३८ ॥
विस्तारे सञ्चये वापि मरीचिः कृपणे घृणौ ।
ऋषिभेदे च[1] मारीचः कल्लोले याज्ञिकद्विजे ॥ १३९ ॥
रक्षोभेदेऽपि—

इति त्रिस्वरचान्ताः ।

अण्डजः स्यात्कृकिडाहौ खगे झषे ।
अण्डजा मृगनाभ्यां स्यादङ्गजो मन्मथे सुते ॥ १४० ॥
मेदे केशे सुन्दरे[3] च कम्बोजो नीवृदन्तरे ।
शङ्खहस्तिभेदयोश्च करजो नखवृक्षयोः ॥ १४१ ॥
काम्बोजः पुनरश्वानां भेदे पुन्नागपादपे ।
वलक्षखदिरे चापि काम्बोजी माषपर्णिका ॥ १४२ ॥
कारुजः कलभे फेने वल्मीके नागकेसरे ।
गैरिके शिल्पिनां चित्रे स्वयं जाततिलेऽपि च ॥ १४३ ॥
कुटजोऽगस्त्ये द्रुभेदे द्रोणे, गिरिजमभ्रके ।
शिलाजतुनि लोहे च गिरिजा मातुलुङ्ग्युमा ॥ १४४ ॥
जलजं कमले शङ्खे नीरजं पद्मकुष्ठयोः ।
परञ्जोऽसौ तैलयन्त्रे छुरिकाफलफेनयोः ॥ १४५ ॥
बाहुजस्तु स्वयंजाते तिले क्षत्रियकीरयोः ।
भूमिजौ नरकाङ्गारौ भूमिजा जनकात्मजा ॥ १४६ ॥
वलजं गोपुरे सस्ये क्षेत्रसङ्गरयोरपि ।
सदाकारे, वलजा तु पृथिव्यां वरयोषिति ॥ १४७ ॥
वनजो मुस्तके स्तम्बेरमे, वनजमम्बुजे ।

---

१ ऽथ । २ याजकद्विजे । ३ ऽङ्गजं रक्ते ।

वनजा तु मुद्गपर्ण्यां सहजः सहसम्भवे ॥ १४८ ॥
निसर्गे च सामजस्तु सामोत्थे कुञ्जरेऽपि च।
हिमजो मेनकापुत्रे हिमजा पार्वती शची ॥ १४९ ॥

इति त्रिस्वरजान्ताः।

क्षेत्रज्ञावात्मनिपुणौ दोषज्ञः प्राज्ञवैद्ययोः।
सर्वज्ञस्तु जिनेन्द्रे स्यात्सुगते शङ्करेऽपि च ॥ १५० ॥

इति त्रिस्वरज्ञान्ताः।

अवटः कूपखिलयोर्गर्ते कुहकजीविनि।
अरिष्टो लशुने निम्बे फेनिले दैत्यकाकयोः ॥ १५१ ॥
अरिष्टं सूत्यगारेऽन्ताश्चिन्हे तक्रे शुभेऽशुभे।
अवटुर्गर्तान्धुघाटासूत्कटस्तीव्रमत्तयोः ॥ १५२ ॥
उच्चटा दम्भचर्यायां प्रभेदे लशुनस्य च।
करटः करिगण्डे स्यात्कुसुम्भे निन्द्यजीवने ॥ १५३ ॥
काके वाद्ये दुर्दुरूढे नवश्राद्धेऽथ कर्कटः।
कुलीरे करणे स्त्रीणां राशौ खगेऽथ कर्कटी ॥ १५४ ॥
शाल्मलीफलवालुङ्क्योः कार्पटो जतुकार्थिनोः।
कीकटः कृपणे नीचे देशभेदे तुरङ्गमे ॥ १५५ ॥
कुरण्टो झिण्टिकाभेदे कुरण्टी दारुपुत्रिका।
कुक्कुटः कुक्कुभे ताम्रचूडे वन्हिकणेऽपि च ॥ १५६ ॥
निषादशूद्रयोः पुत्रे कूपीटं चोदरे जले।
चक्राटो धूर्त्ते दीनारे विषवैद्येऽथ चर्पटः ॥ १५७ ॥
चपेटे स्फारविपुले पर्पटे, चिपिटः पुनः।
पृथुके पिच्चटे खाद्यभेदे स्याद्विस्तृतावपि ॥ १४८ ॥
चिरण्टी तु सुवासिन्यां स्याद्द्वितीयवयःस्त्रियाम्।
जकुटं वार्ताकपुष्पे जकुटो मलये शुनि ॥ १५९ ॥
त्र्यङ्कटं शिक्यभेदे स्याद्धौताञ्जन्यामपि स्मृतम्।
त्रिकूटं सिन्धुलक्षणे त्रिकूटः स्यात्सुवेलके ॥ १६० ॥

---

१ कंस। २ उच्चाटा। ३ वालुकी। ४ कार्थिनौ।

त्रिपुटौ तीरसंतीनौ त्रिपुटा त्रिवृदौषधौ ।
सूक्ष्मैलायां मल्लिकायां द्रोहाटो मृगलुब्धके ॥ १६१ ॥
चतुष्पदीप्रभेदे च वैडालव्रतिकेऽपि च ।
धाराटश्चातकेऽश्वे च निर्दटो निष्प्रयोजने ॥ १६२ ॥
निर्दयेऽन्यदोषरते निष्कुटो गृहवाटिका ।
केदारकः, कपाटश्च पर्पटो भेषजान्तरे ॥ १६३ ॥
पिष्टविकृतौ परीष्टिः परीक्षापरिचर्ययोः ।
स्यात्पर्कटी प्लक्षतरौ पूगादेर्नूतने फले ॥ १६४ ॥
पिच्चटस्तु, नेत्ररोगे पिच्चटं त्रपुसीसयोः ।
बर्वटी व्रीहिभिद्वेश्या बार्वटः कान्तिपुञ्जके ॥ १६५ ॥
वारुण्डे मकरे पोते भाकूटः शैलमीनयोः ।
भार्याटः पटहाजीवे लोभात्स्वस्त्रीसमर्पके ॥ १६६ ॥
भावटो भावके साधुनिवेशे कामुके नटे ।
मर्कटस्तु कपावूर्णनाभे स्त्रीकरणान्तरे ॥ १६७ ॥
मर्कटी करञ्जभेदः शूकशिम्बी च वानरी ।
बीजं च राजकर्कट्याः प्राचीनामलकस्य च ॥ १६८ ॥
गवेधुकाफलं चापि चक्राङ्गीकरजान्तरम् ।
मोरटं त्विक्षुमूले स्यादङ्कोटकुसुमेऽपि च ॥ १६९ ॥
सप्तरात्रात्परं क्षीरे मोरटा मूर्विका मता ।
मोचाटः कदलीगर्भे चन्दने कृष्णजीरके ॥ १७० ॥
रेवटो दक्षिणावर्तशङ्खे जाङ्गुलिकेऽपि च ।
रेवटो(?) सोरटे वेणौ स्याद्वातूलवराहयोः ॥ १७१ ॥
वर्णाटो गायने चित्रकारे स्त्रीकृतजीवने ।
वरटा हंसयोषायां गन्धोल्यां, विकटः पृथौ ॥ १७२ ॥
कराले सुन्दरे वाटे वेकटो जातयौवने ।
वैकटिके मणिकारे वेरटो मिश्रनीचयोः ॥ १७३ ॥
वेरटं बदरीफले शैलाटो मृगवैरिणि ।

---

१ सक्तिनौ । २ भाक्कूट । ३ अपि ।

शुक्रकाचे किराते च देवले गिरिचारिणि ॥ १७४ ॥
संसृष्टं तु सङ्गते स्याच्छुद्धे च वसनादिना।
हर्मटः कच्छपे प्रोक्तः सहस्रकिरणेऽपि च ॥ १७५ ॥

इति त्रिस्वरटान्ताः।

अम्बष्ठो विप्रतो वैश्यातनये नीवृदन्तरे।
अम्बष्ठा स्यादम्ललोण्यां पाठयूथिकयोरपि ॥ १७६ ॥
कनिष्ठोऽल्पेऽनुजे यूनि कनिष्ठा त्वन्तिमाङ्गुलौ।
कमठः कच्छपे दैत्यविशेषे मुनिभाजने ॥ १७७ ॥
जरठः कठिने जीर्णे नर्मठौ षिङ्गचूचुकौ।
प्रकोष्ठः कूर्पराधस्ताद्नृपकक्षान्तरेऽपि च ॥ १७८ ॥
हस्ते च विस्तृतकरे प्रतिष्ठा गौरवे स्थितौ।
छन्दोजातौ यागसिद्धौ मकुष्ठौ धान्यमन्थरौ ॥ १७९ ॥
लघिष्ठो भेलकेऽत्यल्पे स्याद्वरिष्ठस्तु तित्तिरौ।
वरिष्ठं मरिचे ताम्रे वरोरुतमयोरपि ॥ १८० ॥
वैकुण्ठो वासवे विष्णौ श्रीकण्ठः कुरुजाङ्गले।
शङ्करे चाऽथ साधिष्ठोऽसर्थे दृढतमेऽपि च ॥ १८१ ॥

इति त्रिस्वरठान्ताः।

कारण्डो मनुकोशेऽसौ कारण्डं वेदलाण्डके।
कूष्माण्डौ गणकर्कारू कूष्माण्डी त्वम्बिकौषधी ॥ १८२ ॥
कोदण्डं कार्मुके देशभेदभ्रूलतयोरपि।
गारुडं स्यान्मरकते विषशास्त्रे विषोद्भवे ॥ १८३ ॥
तरण्डो बडिशीसूत्रबद्धस्तुनि भेलके।
तित्तिडो दैत्यभेदे स्याद्यमदासेऽथ तित्तिडी ॥ १८४ ॥
कालदासे पादपे च तिन्तिडी चुक्रचिञ्चयोः।
द्राविडो वेधमुख्ये स्यान्नीवृदन्तरशङ्कयोः ॥ १८५ ॥
निर्गुण्डी नीलशेफाली सिन्दुवारोऽब्जकन्दकः।
प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनि ॥ १८६ ॥
प्रकाण्डो विटपे शस्ते मूलस्कन्धान्तरे तरोः।

पिचण्डो जठरे प्रोक्तः पशोरवयवेऽपि च ॥ १८७ ॥
पूत्यण्डः स्याद्गन्धमृगे सर्पभिद्गन्धकीटयोः ।
भेरुण्डौ भीषणखगौ भेरुण्डा देवताभिदि ॥ १८८ ॥
मारुण्डस्तु भुजङ्गाण्डे मार्गे गोमयमण्डले ।
मार्तण्डस्तरणौ क्रोडे वरण्डो वदनव्यथा ॥ १८९ ॥
अन्तरावेदिसङ्घौ च वरण्डा शारिका छुरी ।
वर्त्ति,र्वारुण्डस्तु कर्णदृञ्झले सेकभाजने ॥ १९० ॥
फणिराजद्वारपिण्ड्योर्वारुण्डः खग उद्गिणि (?) ।
वितण्डा वादभेदे स्यात्कच्चीशाके शिलाह्वये ॥ १९१ ॥
करवीर्यामपि प्रोक्तः शिखण्डो बर्हिचूडयोः ।
सरण्डः स्यात्कृकलासे भूषणान्तरधूर्त्तयोः ॥ १९२ ॥
सपिण्डस्तनये प्रोक्तो दायादे सदृशेऽपि च ।

इति त्रिस्वरडान्ताः ।

अध्यूढ ईश्वरे,ऽध्यूढा कृतसापत्न्ययोषिति ॥ १९३ ॥
आषाढो व्रतिनां दण्डे मासे च मलयाचले ।
उपोढ ऊढे निकटेऽप्युद्गूढः पीवरोढयोः ॥ १९४ ॥
प्ररूढो जठरे वृद्धे प्रगाढो दृढकृच्छ्रयोः ।
वारूढः शम्बले वस्त्राञ्चलेऽग्नौ पञ्जरेऽररे ॥ १९५ ॥
विरूढोऽङ्कुरिते जाते विगूढो गुह्यगुप्तयोः ।
समूढं पुञ्जिते भुग्ने सद्योजातेऽनुपप्लुवे ॥ १९६ ॥
संरूढोऽङ्कुरिते प्रौढे समीढो मूत्रिते घने ।

इति त्रिस्वरढान्ताः ।

अभीक्ष्णं तु भृशे नित्येऽप्यरुणोऽनूरुसूर्ययोः ॥ १९७ ॥
सन्ध्यारागे बुधे कुष्ठे निःशब्दाव्यक्तरागयोः ।
व्याकुले कपिले वर्णे रक्तवर्णेऽपि वाच्यवत् ॥ १९८ ॥
अरुणा त्रिवृताश्यामामञ्जिष्ठाऽतिविषासु च ।
अरणिस्तु भवेदग्निमन्थे निर्मन्थ्यदारुणि ॥ १९९ ॥

इन्द्राणी तु शचीसिन्दुवारयोः करणे स्त्रियाः ।
इरिणं तूषरे शून्येऽपीक्षणं दर्शने दृशि ॥ २०० ॥
उषणा तु कणायां स्यादूषणं मरिचे मतम् ।
एषणी व्रतमार्गानुसारिण्यां च तुलाभिदि ॥ २०१ ॥
कङ्कणं करभूषायां हस्तसूत्रे च शेखरे ।
कच्चूणं रौहिषं फञ्जा कल्याणं हेम्नि मङ्गले ॥ २०२ ॥
करणः शूद्र्यां विट्पुत्रे करणं क्षेत्रगात्रयोः ।
गीताङ्गहारसंवेशभिक्षुकायस्थसंहतौ ॥ २०३ ॥
वर्णानां स्पष्टतादौ च योगिनामासनादिषु ।
हृषीके साधकतमे बवादौ च कृतावपि ॥ २०४ ॥
करुणा तु कृपायां स्यात् करुणो रसवृक्षयोः ।
करेणुर्गजहस्तिन्योः कर्णिकारतरावपि ॥ २०५ ॥
कारणं घातने हेतौ करणे, कारणा पुनः ।
यातना, कार्मणं मन्त्रादियोगे कर्मकारके ॥ २०६ ॥
काकिणी मानदण्डे स्यात्तुरीयांशे पणस्य च ।
कृष्णलायां वराटे च कृपाणी कर्त्तरी छुरी ॥ २०७ ॥
कृपाणोऽसौ, क्षेपणी तु नौदण्डजालभेदयोः ।
कोङ्कणः स्याज्जनपदे कोङ्कणं त्वायुधान्तरे ॥ २०९ ॥
ग्रहणं स्वीकृतौ बन्द्यां धीगुणे शब्द आदरे ।
ग्रहोपरागे प्रत्याये ग्रहणी तु रुगन्तरम् ॥ २१० ॥
ग्रामणीर्भोगिके पत्यौ प्रधाने क्षुरमर्दिनि ।
ग्रामिणीः पण्ययोषा स्याद्ग्रामेयीलीलिकाऽपि च ॥ २११ ॥
गोकर्णोऽश्वतरे सर्पे मृगभेदे गणान्तरे ।
अङ्गुष्ठाऽनामिकोन्माने गोकर्णी मूर्विकौषधौ ॥ २१२ ॥
चरणो बह्वृचादौ स्यात्पादे च मूलगोत्रयोः ।
चरणं भ्रमणे भक्षे रासभस्य ध्वनावपि ॥ २१३ ॥
जारणो रुचके हिङ्गौ जीरके कृष्णजीरके ।
तरुणः कुब्जपुष्पे स्यादेरण्डे यूनि नूतने ॥ २१४ ॥

तरणिस्तरणेऽर्केऽशौ कुमार्योषधिनौकयोः ।
यष्ठावद्धौ,(?) दक्षिणस्तु परच्छन्दानुवर्तिनि ॥ २१५ ॥
दक्षेऽपसव्ये सरलेऽप्राचीनेऽप्यथ दक्षिणा ।
दिक् प्रतिष्ठा यज्ञदानं द्रविणं काञ्चने धने ॥ २१६ ॥
पराक्रमे बलेऽपि स्याद् द्रुघणः पर्शुवेधसोः ।
मुद्गरेऽप्यथ दुर्वर्णं कलधौतकुवर्णयोः ॥ २१७ ॥
दौर्वीणं मृष्टपर्णे स्याद्धरितालीरसेऽपि च ।
धरणोऽहिपतौ लोके स्तने धान्ये दिवाकरे ॥ २१८ ॥
धरणं धारणे मानविशेषे, धरणी भुवि ।
धारणः सलिले स्वर्गे परमेष्ठिनि, धर्मणः ॥ २१९ ॥
सर्पभेदे वृक्षभेदे धर्षिणी त्वभिसारिका ।
धर्षणं स्यात्परिभवे धारिणी नाडिकादिभिः ॥ २२० ॥
धारणा स्यात्तु योगाङ्गे धारणं ग्रहणे मतम् ।
धिषणस्त्रिदशाचार्ये धिषणा तु मनीषिका ॥ २२१ ॥
निर्याणं निर्गमे मोक्षगजापाङ्गप्रदेशयोः ।
निर्वाणं मोक्षनिर्वृत्योर्विघाते करिमज्जने ॥ २२२ ॥
निर्माणं सारनिर्मित्योः कर्मभेदे समञ्जसे ।
निःश्रेणिरधिरोहिण्यां खर्जूरीपादपेऽपि च ॥ २२३ ॥
प्रघणोऽलिन्दके ताम्रकलशे लोहमुद्गरे ।
प्रवणस्तु क्षणे प्रह्वे क्रमनिम्ने चतुष्पथे ॥ २२४ ॥
आयत्ते च प्रमाणं तु मर्यादासत्यवादिनोः ।
प्रमातर्येकतेयत्तानित्येषु हेतुशास्त्रयोः ॥ २२५ ॥
पत्रोर्णं धौतकौशेये पत्रोर्णः शोणकद्रुमे ।
पक्षिणी पूर्णिमाखग्योः शाकिनीरात्रिभेदयोः ॥ २२६ ॥
प्रवेणिर्वेणिकुथयोः पुराणं प्रत्नशास्त्रयोः ।
पुराणः षोडशपणे पुरणं वानतन्तुषु ॥ २२७ ॥
पूरके पिष्टभेदे च पूरणी शाल्मलिद्रुमे ।

---

१ स्नेहपिच्छिले । २ कौशेये । ३ पटारम्भकसूत्रेषु ।

प्रोक्षणं सेकवधयोर्भरणं वेतने भृतौ ॥ २२८ ॥
भरणी शोणके भे च भ्रमणी स्याद्धीशितुः ।
क्रीडादौ कारुण्डिकायां भीषणं सल्लकीरसे ॥ ५२९ ॥
भीषणो दारुणे गाढे मत्कुणोऽश्मश्रुपूरुषे ।
उद्दंशे नालिकेरे च निर्विषाणगजेऽपि च ॥ २३० ॥
मसृणोऽकठिने स्निग्धे मसृणा स्यादतस्यपि ।
मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि ॥ २३१ ॥
यन्त्रणं बन्धने त्राणे नियमे, रमणं पुनः ।
पटोलमूले जघने रमणो रासभे प्रिये ॥ २३२ ॥
रोषणो[2] रोषणे हेमघर्षे पारद ऊषरे ।
रोहिणी सोमवल्के भे कण्ठरोगोभयोर्गवि ॥ २३३ ॥
लोहिताकट्टरोहिण्योर्लवणो राक्षसे रसे ।
अस्थि[3]भेदे, लवणा त्विट्, लक्षणं नामचिह्नयोः ॥२३४॥
लक्ष्मणं च लक्षणस्तु सौमित्रौ लक्ष्मणो यथा ।
लक्ष्मणः श्रीयुते, लक्ष्मणौषधौ सारसस्त्रियाम् ॥ २३५ ॥
वरुणोऽर्केऽप्पतौ वृक्षे वरणे वरुणद्रुमे ।
प्राकारे, वरणं वृत्यां वारणः स्यान्मतङ्गजे ॥ २३१ ॥
वारणं तु प्रतिषेधे ब्राह्मणं विप्रसंहतौ ।
वेदे च ब्राह्मणो विप्रो ब्राह्मणी वाडवस्त्रियाम् ॥ २३६ ॥
स्पृक्कायां फञ्जिकायां च वारुणी पश्चिमा सुरा ।
गण्डदूर्वा, विषाणं तु शृङ्गे कोलेभदन्तयोः ॥ २३७ ॥
विषाणी मेषशृङ्ग्यां स्याद्विपणिः पण्यहट्टयोः ।
पण्यवीथ्यां, श्रमणस्तु निर्ग्रन्थे निन्द्यजीविनि ॥ २३८ ॥
श्रमणा सुलता मांसी मुण्डीरी च सुदर्शना ।
श्रवणो नक्षत्रभेदे श्रवणं श्रवसि श्रुतौ ॥ २३९ ॥
शरणं रक्षणे गेहे वधरक्षकयोरपि ।
श्रावणो मासि पाखण्डे, दध्यालयां श्रावणा मता ॥ २४० ॥

१ ऽगाढे । २ रोषारक्ते क्रोधने । ३ अब्धि ।

श्रीपर्णस्त्वग्निमन्थेऽब्जे श्रीपर्णी शाल्मलौ हठे ।
सङ्कीर्णो निचितेऽशुद्धौ सरणिः श्रेणिमार्गयोः ॥ २४१ ॥
सारणः स्यादतीसारे दशकन्धरमन्त्रिणि ।
सारणी स्वल्पसरिति प्रसारण्योषधावपि ॥ २४२ ॥
सिङ्घाणं तु घ्राणमलेऽयःकिट्टे काचभाजने ।
सुषेणो विष्णुसुग्रीववैद्ययोः करमर्दके ॥ २४३ ॥
सुवर्णं काञ्चने कर्षे सुवर्णालौ मखान्तरे ।
कृष्णागुरुणि वित्ते[1] च सुपर्णः कृतमालके ॥ २४४ ॥
गरुडे स्वर्णचूडे च सुपर्णी विनताऽब्जिनी ।
हरणं यौतकद्रव्येऽप्यङ्गहारे भुजे हृतौ ॥ २४५ ॥
हरिणौ पाण्डुसारङ्गौ हरिणी चारुयोषिति ।
सुवर्णप्रतिमायां च हरितावृत्तभेदयोः ॥ २४६ ॥
हर्षणं श्राद्धदेवे च हर्षके योगरुग्भिदोः ।
हरेणुः कुलयोषायां रेणुकायां सतीनके ॥ २४७ ॥
हिरणं हिरण्यमिव वराटे हेम्नि रेतसि ।

इति त्रिस्वरणान्ताः ।

अमृतं यज्ञशेषाम्बुसुधामोक्षेष्वयाचिते ॥ २४८ ॥
अन्नकाञ्चनयोर्जग्धौ खे स्वादुनि रसायने ।
घृते दुग्धे[2] गोचरे चाऽमृतो धन्वन्तरौ सुरे ॥ २४९ ॥
अमृताऽऽमलकापथ्यागूडूचीमाधवीषु[3] च ।
अनृतं कर्षणेऽलीके चाऽक्षतः स्यादहिंसिते ॥ २५० ॥
षण्ढे लाजेष्वर्दितं तु वातव्याधौ हतेऽर्थिते ।
अजितस्तीर्थकृद्भेदे बुद्धे विष्णावनिर्जिते ॥ २५१ ॥
अच्युतो द्वादशस्वर्गे केशवाऽभ्रष्टयोरपि ।
अव्यक्तं प्रकृतावात्मन्यव्यक्तोऽस्फुटमूर्खयोः ॥ २५२ ॥
अनन्तं खे निरवधावनन्तस्तीर्थकृद्भिदि ।
विष्णौ शेषेऽप्यनन्ता तु गुडूची भूर्दुरालभा ॥ २५३ ॥

१ वित्ते । २ गोरसे । ३ मागधी ।

विशल्या लाङ्गली दूर्वा शारिवा हैमवत्यपि ।
अश्मन्तमशुभे क्षेत्रे चुल्यामनव्ययौ मृतौ ॥ २५४ ॥
अमतिः काले चन्द्रे स्यादङ्कतिश्विन्हवेधसोः ।
अग्निहोत्रिण्यगस्तिर्द्रुमुन्योः, स्याददितिर्भुवि ॥ २५५ ॥
देवमातरि पार्वत्यामंहतिस्त्यागरोगयोः ।
आपातः पाते तत्कालेऽप्यादृतः सादरेऽर्चिते ॥ २५६ ॥
आख्यातं भाषिते स्यादावाघ्रातं ग्रस्तशङ्किते ।
आप्लुतः स्नातके स्नातेऽप्यावर्तः पयसां भ्रमे ॥ २५७ ॥
आवर्तने चिन्तने चाऽनर्त्तो जनपदे जने ।
समरे नृत्यशालायामाहतं तु मृषार्थके ॥ २५८ ॥
गुणिते ताडिते चाप्याध्मातः शब्दितदग्धयोः ।
वातरोगेऽप्यथाऽऽस्फोतः कोविदारार्कपर्णयोः ॥ २५९ ॥
आस्फोता गिरिकर्ण्यां तु वनमाल्यामथाऽऽचितः ।
छादिते शकटोन्मेये पलानामयुतद्वये ॥ २६० ॥
सङ्गृहीतेऽप्यथाऽऽयस्तः क्लिशिते तेजिते हते ।
क्रुद्धे क्षिप्तेऽथाऽऽयतिः स्यात्प्रभावोत्तरकालयोः ॥ २६१ ॥
दैर्घ्यसङ्गेऽप्याकृतिस्तु जातौ रूपे वपुष्यपि ।
आयत्तिर्वासरे स्नेहे वाशित्वे स्थाम्नि सीम्नि च ॥ २६२ ॥
आसत्तिः सङ्गमे लाभेऽप्यापत्तिः प्राप्तिदोषयोः ।
आपद्यपीङ्गितं तु स्याच्चेष्टायां गमनेऽपि च ॥ २६३ ॥
उत्तप्तं चञ्चले शुष्कमांससन्तप्तयोरपि ।
उचितं विदितेऽभ्यस्ते मिते युक्तेऽप्यथोत्थितम् ॥ २६४ ॥
वृद्धिमत्प्रोद्यतोत्पन्नेषूदितं तूद्गतोक्तयोः ।
उद्धृतं स्यादतुलिते परिभुक्तोज्झितेऽपि च ॥ २६५ ॥
उषितं व्युषिते प्लुष्टेऽप्युच्छ्रितं तूच्चजातयोः ।
प्रवृद्धे स्यादथोद्वान्त उद्गीर्णे निर्मदद्विपे ॥ २६६ ॥
उदात्तो दातृमहतोर्हृद्ये च स्वरभिद्यपि ।

१ वह्नि । २ च । ३ क्लेशिते । ४ न्युषिते ।

उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः ॥ २६७ ॥
उदन्तः साधौ वार्तायामुद्घातः समुपक्रमे ।
मुद्गरेऽभ्यासयोगाय कुम्भकादित्रयेऽपि च ॥ २६८ ॥
पादस्खलन उत्तुङ्गे[1]ऽप्युन्नतिस्ताक्ष्र्ययोषिति ।
उदग्रे[2] च समृद्धौ चाप्येधतुर्नरि पावके ॥ २६९ ॥
क्रन्दितो रुदिते हूतौ कलितं विदिताप्तयोः ।
कपोतः पारावते स्यात्कवकाख्यविहङ्गमे ॥ २७० ॥
कापोतं यामुने खर्ज्यां कपोतानाञ्च संहतौ ।
किरातः स्यादल्पतनौ भूनिम्बम्लेच्छयोरपि ॥ २७१ ॥
किराती कुट्टिनी गङ्गा कृतान्तोऽक्षेमकर्मणि ।
सिद्धान्तयमदैवेषु गर्जितो मत्तकुञ्जरे ॥ २७२ ॥
गर्जितं जलदध्वाने ग्रन्थितं हतदृब्धयोः ।
आक्रान्ते च गरुत्मांस्तु विहगे पन्नगाशने ॥ २७३ ॥
गभस्तिः स्याद्दिनकरे स्वाहाकिरणयोरपि ।
गोदन्तो हरिताले स्यात्सन्नद्धे दंशितेऽपि च ॥ २७४ ॥
गोपतिः शङ्करे षण्ढे नृपतौ त्रिदशाधिपे[3] ।
सहस्रकिरणे चापि ज्वलितौ दग्धभास्करौ[4] ॥ २७५ ॥
जयन्तावैन्द्रिगिरिशौ जयन्त्युमापताकयोः ।
जीवन्त्यामिन्द्रपुत्र्यां च जगती छन्दसि क्षितौ ॥ २७६ ॥
जम्बूवप्रे जने लोके जामाता दुहितुः पतौ ।
सूर्यावर्ते वल्लभे च जीमूतो वासवेऽम्बुदे ॥ २७७ ॥
घोषकेऽद्रौ भृतिकरे जीवन्ती शमिवन्दयोः ।
जीवन्त्यां च गुडूच्यां च जीवातुर्जीवनौषधे ॥ २७८ ॥
जीविते च जृम्भितं तु प्रवृद्धे च विचेष्टिते ।
जृम्भायां स्फुटिते चापि त्वरितं वेगतद्वतोः ॥ २७९ ॥
तालितं स्तनिते वस्त्रे वाद्यभाण्डे गुणे स्तृतौ ।
त्रिगर्तो गणिते देशे त्रिगर्ता कामुकास्त्रियाम् ॥ २८० ॥

१ उदग्रे । २ उदये । ३ त्रिदशाप्यतौ । ४ भास्वरौ ।

घुर्घुर्यामथ तृणता तृणत्वे कार्मुकेऽपि च।
दंशितो वर्मिते दष्टे स्रवन्ती च द्रवन्त्यपि ॥ २८१ ॥
नद्यामोषधिभेदे च द्विजातिर्ब्राह्मणेऽण्डजे।
दुर्जातं व्यसनासम्यग्जातयोरथ दुर्गतिः ॥ २८२ ॥
दारिद्र्ये[1] नरके चापि दृष्टान्तः स्यादुदाहृतौ।
शास्त्रेऽथ निकृतं विप्रलब्धे विप्रकृतेऽधमे ॥ २८३ ॥
निरस्तः प्रेरितशरे सन्त्यक्ते त्वरितोदिते।
निष्ठ्यूते प्रतिहते च निमित्तं हेतुलक्ष्मणोः ॥ २८४ ॥
निवातो वातरहिते दृढसन्नाह आश्रये।
निर्मुक्तो मुक्तनिर्मोकभुजगे निष्परिग्रहे ॥ २८५ ॥
निशान्तं सदने शान्ते प्रभातेऽप्यथ निर्वृतिः।
मोक्षे मृत्यौ[2] सुखे सौस्थे निकृतिः शठशाठ्ययोः ॥ २८६ ॥
भर्त्सनेऽभिभवे क्षेपे निर्ऋतिर्निरुपद्रवे।
अलक्ष्म्यां दिक्पतौ चापि नियती दैवसंयमौ ॥ २८७ ॥
प्रभूतमुद्गते[3] प्राज्ये प्रसूतं जातपुष्पयोः।
प्रतीतः सादरे प्राज्ञे प्रथिते ज्ञातहृष्टयोः ॥ २८८ ॥
प्रहतं विस्तृते क्षुण्णे[4] पलितं पङ्कतापयोः।
पक्वकेशे शैलजाते पण्डितः सिह्लश्रीमतोः ॥ २८९ ॥
प्रणीत उपसम्पन्ने कृते क्षिप्ते प्रवेशिते।
संस्कृताग्नौ च पर्याप्तं शक्ते[5] तृप्तौ निवारणे ॥ २९० ॥
यथेष्टे दोषे कृच्छ्रे च पर्याप्तिः परिरक्षणे।
प्राप्ते कामे, प्रसृतोऽर्द्धाञ्जलौ वेगिविनीतयोः ॥ २९१ ॥
तते च प्रसृता जङ्घा प्रमीतं प्रोक्षिते मृते।
पर्यस्तं तु हते स्रस्ते प्रपातो नि[6]र्झरे भृगौ ॥ २९२ ॥
अवटे पतने कच्छे पक्षतिः प्रतिपत्तिथौ।
पक्षमूले, पर्वतस्तु देवर्षौ धरणीधरे ॥ २९३ ॥

---

१ नरके निःस्वतायां च। २ पुष्टौ। ३ मुद्भवे
४ क्षु-(ध्वे) ध्वे। ५ पूर्णे। ६ सौसिके।

प्रसूतिः प्रणवोत्पत्तिपुत्रेषु दुहितर्यपि ।
पद्धतिः पथि पङ्क्तौ च प्रकृतिर्योनिशिल्पिनोः ॥ २९४ ॥
पौरामात्यादिलिङ्गेषु गुणसाम्यस्वभावयोः ।
प्रत्ययात्पूर्विकायां च प्रततिर्विस्तृतिर्लता ॥ २९५ ॥
प्रवृत्तिर्वृत्तवृत्तान्तप्रवाहेषु प्रवर्तने ।
प्रचितः शकटोन्मेषे पलानामयुतद्वये ॥ २९६ ॥
प्रकृतं तु प्रस्तुतेऽपि प्रकृतः प्रकृतिस्थिते ।
प्रार्थितं शत्रुसंरुद्धे याचिते निहतेष्टयोः ॥ २९७ ॥
पार्वती शल्लकी गौरी जीवनी द्रुपदात्मजा ।
पिण्डितं गुणिते[1] सान्द्रे पिशितं मांसवाचकम् ॥ २९८ ॥
पिशिता मांसिकायां स्यात् पीडितं करणे स्त्रियाः ।
बाधिते यन्त्र[2]संमर्दे पुटितः स्यूतपाटिते ॥ २९९ ॥
हस्ति[3]पुटे, पृषतस्तु मृगे बिन्दौ खरोहिते ।
श्वेतबिन्दुयुतेऽपि स्यात् प्रेषितं प्रेरिते गते ॥ ३०० ॥
प्रोक्षितं सिक्तहतयोर्भरतः शबरे नटे ।
क्षेत्रे रामानुजे शास्त्रे दौष्यन्तावृषभात्मजे ॥ ३०१ ॥
तन्तुवाये, भारतं तु शास्त्रे द्वीपांशभिद्यपि ।
भारती य[4]क्षिणीवृत्तिभिदोर्वाच्यथ भावितम् ॥ ३०२ ॥
वासिते प्राप्ते, भासन्तो भे सूर्ये रम्यभासयोः ।
मथितं निर्मल[5]व्याजे व्यालोडितनिघृष्टयोः ॥ ३०३ ॥
महती तु बृहत्यां स्याद्वीणायां नारदस्य च ।
मालती युवतौ काकमाच्यां जातीविशल्ययोः ॥ ३०४ ॥
ज्योत्स्नायां निशि नद्यां च मुण्डितं खण्डिते हृते ।
मुहूर्तमल्पकाले स्याद्घटिकाद्वितयेऽपि च ॥ ३०५ ॥
[illegible]त सांच्छ्रये मूढे रजतं दान्तदन्तयोः ।
धवले शोणिते हारे दुर्वर्णे ह्रदशैलयोः ॥ ३०६ ॥

---

१ गणिते । २ यंत्रान्तरमर्दितेऽपि च । ३ हस्तपुटे ।
४ पक्षिणि । ५ निर्जलधौते ।

रसितं स्वर्णादिलिप्ते रुतस्तनितयोरपि ।
रमतिर्नायके स्वर्गे रमितं स्तनिते रुते ॥ ३०७ ॥
रेवती बलभार्यायां नक्षत्रभिदि मातृषु ।
रैवतः स्यादुज्जयन्ते सुवर्णालौ हरे[1]ऽसुरे ॥ ३०८ ॥
रोहितो लोहिते मीने मृगे रोहितकद्रुमे ।
रोहितं त्वृजुशक्रास्त्रे धीरे, ललितमीप्सिते ॥ ३०९ ॥
तडिते हारभेदे च लोहितो मङ्गले नदे ।
वर्णभेदे, लोहितं तु कुङ्कुमे रक्तचन्दने ॥ ३१० ॥
गोशीर्षे रुधिरे युद्धे वर्धितं छिन्नवृद्धयोः[2] ।
प्रसूते, वनितं तु स्यात्प्रार्थिते सेवितेऽपि च ॥ ३११ ॥
वनितोत्पादितात्यर्थरागनार्यपि नार्यपि ।
वसतिः स्यादवस्थाने निशायां सदनेऽपि च ॥ ३१२ ॥
व्रततिस्तु प्रतानिन्यां विस्तारे, वहतुः पथि ।
वृषभे, वहतिर्धेन्वां सचिवेऽप्यथ वापितम् ॥ ३१३ ॥
बीजाकृते मुण्डिते च व्याघातो योगविघ्नयोः ।
घातेऽपि, व्यायतं दीर्घे व्यापृतेऽतिशये दृढे ॥ ३१४ ॥
वासन्तः परपुष्टे स्यात्करभेऽवहिते विटे ।
वासन्ती माधवीयूथीपाटलास्वथ वासितम् ॥ ३१५ ॥
वस्त्रच्छन्ने ज्ञात[3]मात्रे भाविते विहगारवे ।
वासिता करिणीनार्योर्विहितं तु कृते श्रुते ॥ ३१६ ॥
विदितं स्वीकृते ज्ञाते विवस्वान् देवसूर्ययोः ।
विश्रुतं तु प्रतीते स्याज्ज्ञात[4]हर्षितयोरपि ॥ ३१७ ॥
विगतो निःप्रभे वीते विविक्तो वसुनिह्नुके[5] ।
विविक्तं स्यादसम्पृक्ते रहःपूतविवेकिषु ॥ ३१८ ॥
विधुतं कम्पिते त्यक्ते विकृतो रोगसंस्कृतः ।
बीभत्सश्च विनीतस्तु निभृते निर्जितेन्द्रिये ॥ ३१९ ॥

---

१ पिनाकिनि । २ पूर्णयोः । ३ ज्ञान । ४ ज्ञात ।
५ वस्तनिन्दके ।

वाणिज्ये साधुवाह्यश्वे विनयग्राहिते हृते ।
विनतः प्रणते भुग्ने विनता पिटिकाभिदि ॥ ३२० ॥
सुपर्णायां, विहस्तस्तु विकले[1] पण्डकेऽकरे ।
विश्वस्तः कृतविश्वासे विश्वस्ता विधवास्त्रियाम् ॥ ३२१ ॥
विजातो विकृते जाते विजाता तु प्रसूतिका ।
विवर्तो नर्त्तने सङ्कोऽपावृत्तौ, विकृती रुजि ॥ ३२२ ॥
डिम्बे विकारे मद्यादौ विपत्तिर्यातनापदोः ।
विच्छित्तिः स्यादङ्गरागे हारविच्छेदयोरपि ॥ ३२३ ॥
विधाता द्रुहिणे कामे विनेतादेशके नृपे ।
वृत्तान्तस्तु प्रकरणे कार्त्स्न्ये वार्ताप्रकारयोः ॥ ३२४ ॥
बृहती क्षुद्रवार्ताक्यां छन्दोवसनभेदयोः ।
महत्यां वाचि वर्द्धन्यां[2] वेल्लितं कुटिले धुते ॥ ३२५ ॥
प्लुते, वेष्टितं लासके रुद्धे स्त्रीकरणान्तरे ।
शकुन्तो विहगे भासे श्रीपतिर्विष्णुभूपयोः ॥ ३२६ ॥
शुद्धान्तः स्याद्रहःकक्षान्तरो राज्ञोऽवरोधने ।
संख्यावान् बुधमितयोः सरस्वानुदधौ नदे ॥ ३२७ ॥
संवर्तः प्रलयेऽक्षद्रौ संहतं मिलिते दृढे ।
स्खलितं छलिते भ्रेषे संस्कृतं लक्षणान्विते ॥ ३२८ ॥
भूषिते कृत्रिमे शस्ते सङ्घातो घातसङ्घयोः ।
नरके च समाप्तिः स्यादवसाने समर्थने ॥ ३२९ ॥
संहिता वर्णसंयोगे शास्त्रवेदैकदेशयोः ।
स्थपतिः सौविदेऽधीशे बृहस्पतीष्टियज्वनि ॥ ३३० ॥
कारुके च सन्ततिस्तु तनये दुहितर्यपि ।
परम्पराभवे पङ्क्तौ गोत्रविस्तारयोरपि ॥ ३३१ ॥
सन्नतिः प्रणतिध्वन्योः सङ्गतिर्ज्ञानसङ्गयोः ।
संमतिर्वाञ्छाऽनुमत्योः समितिर्युधि सङ्गमे ॥ ३३२ ॥

---

१ विह्वले । २ वार्द्धान्धां ।

साम्ये सभार्यां, संवित्तिः प्रतिपत्तिविवादयोः ।
स्थापितं निश्चिते न्यस्ते स्तिमितौ क्लिन्ननिश्चलौ ॥३३३॥
सिकताः स्युर्वालुकायां सिकता सैकते रुजि ।
सुकृतं तु शुभे पुण्ये सुविधानेऽथ सुव्रता ॥ ३३४ ॥
सुखदोह्यसौरभेय्यां सुव्रतोऽर्हति सद्व्रते ।
सुनीतिर्ध्रुवमाता स्यात्सुनया, सुरतं पुनः ॥ ३३५ ॥
मोहने, सुरता देवभावे च सुहितः पुनः ।
तृप्तावुक्ते सुष्ठुहिते सूनृतं प्रियसत्यवाक् ॥ ३३६ ॥
मङ्गलं च हसन्ती तु मल्लिकाऽङ्गारधानिका ।
स्मिताङ्गाशाकिनाभेदे हर्मितं क्षिप्तदग्धयोः ॥ ३३७ ॥
हारीतो मुनिभेदे स्यात्कैतवे विहगान्तरे ।
हृषितं विस्मिते प्रीते प्रणते हृष्टरोमणि ॥ ३३८ ॥

इति त्रिस्वरतान्ताः ।

अश्वत्थो गर्दभाण्डे स्यात्पिप्पले संस्मृतौ जले ।
अश्वत्थेषापौर्णमास्यामतिथिः कुशनन्दने ॥ ३३९ ॥
क्रुध्यागन्ता, वव्यथस्तु व्यथाहीने च पन्नगे ।
अव्यथा तु हरीतक्यामुपस्थो योनिलिङ्गयोः ॥ ३४० ॥
उत्सङ्गगुदयोश्चापि समीपस्थितवत्यपि ।
उन्माथो मारणे कूटयन्त्रघातकयोरपि ॥ ३४१ ॥
उद्रथस्ताम्रचूडे स्यान्महेन्द्रमहकामुके ।
क्षवथुः कासे छिक्कायां कायस्थोऽक्षरजीवकः ॥ ३४२ ॥
परमात्मा च, कायस्था हरीतक्यामलक्यपि ।
गोग्रन्थिस्तु करीषे स्याद्गोष्ठे गोजिह्विकौषधौ ॥ ३४३ ॥
दमथो दमने दण्डे निर्ग्रन्थो भिक्षुमूर्खयोः ।
श्रमणे च निशीथस्तु रात्रिमात्राऽर्द्धरात्रयोः ॥ ३४४ ॥
प्रथमः शङ्करगणे प्रथमा तु हरीतकी ।
मन्मथः कामचिन्तायां पुष्पचापकपित्थयोः ॥ ३४५ ॥

१ हर्मितौ ।

रुदथः कुक्कुटशुनोर्वरूथः[1] पिककालयोः ।
वरूथं स्यात्तनुत्राणे रथगोपनवेश्मनोः ॥ ३४६ ॥
वयस्थो मध्यमवया वयस्था शाल्मलिद्रुमे ।
ब्राह्मीगुडूचीकाकोलीसूक्ष्मैलामलकीषु च ॥ ३४७ ॥
वमथुर्वमने कासे [2]मातङ्गकरशीकरे ।
विदथो योगिनि प्राज्ञे शमथः सचिवे शमे ॥ ३४८ ॥
शपथः कार आक्रोशे शपने च सुतादिभिः ।
[3]शमथुः स्यादजगरे निद्रालौ मरणेऽपि च ॥ ३४९ ॥
षड्ग्रन्थः करञ्जभेदे षड्ग्रन्था तु वचा शटी ।
समर्थः शक्तिसम्पन्ने सम्बद्धार्थे हितेऽपि च ॥ ३५० ॥
सिद्धार्थः सर्षपे शाक्यसिंहेऽन्त्यजिनवप्तरि ।

इति त्रिस्वरथान्ताः ।

अर्बुदः पर्वते मांसकीलके दशकोटिषु ॥ ३५१ ॥
अर्द्धेन्दुः स्यादतिप्रौढस्त्रीगुह्याङ्गुलियोजने ।
गलहस्ते नखाङ्केऽर्द्धचन्द्रेऽङ्गदस्तु वालिजे ॥ ३५२ ॥
अङ्गदं तु केयूरे स्यादङ्गदा याम्यदिग्गजी ।
आस्पदं कृत्यपदयोरामोदो गन्धहर्षयोः ॥ ३५३ ॥
आक्रन्दो दारुणरणे सारावरुदिते नृपे ।
क्षणदं तोये, क्षणदो गणके, क्षणदा निशि ॥ ३५४ ॥
कपर्दः पार्वतीभर्त्तुर्जटाजूटे वराटके ।
कर्णान्दुः स्यात्कर्णपाल्युत्क्षिप्तिका, कुमुदः कपौ ॥ ३५५ ॥
दिङ्नागनागयोर्दैत्यविशेषे च सितोत्पले ।
कुमुदा कुम्भीगम्भार्योः कुसीदं वृद्धिजीवने ॥ ३५६ ॥
वृद्ध्याजीवे, कौमुदस्तु कार्तिके, कौमुदीन्दुभा ।
गोविन्दस्तु गवाध्यक्षे वासुदेवे बृहस्पतौ ॥ ३५७ ॥
गोष्पदं गोखुरे[5] श्वभ्रे गवां च गतिगोचरे ।

---

१ वरूथ । २ गजसा ।
३ शपथः । ४ त आ । ५ गोष्पदश्वभ्रे ।

जलदो मुस्तके मेघे जीवदो रिपुवैद्ययोः ॥ ३५८ ॥
ग्रन्थपर्णे, तमोभित्तु[1] शशिमार्तण्डवह्निषु ।
तोयदो मुस्तके मेघे तोयदं नवनीतजे ॥ ३५९ ॥
दारदो विषभेदे स्यात्पारदे हिङ्गुलेऽपि च ।
दायादौ सुतसपिण्डौ दोहदो गर्भलक्षणे ॥ ३६० ॥
अभिलाषे तथा गर्भे धनदौ दातृगुह्यकौ ।
नलदा मांस्यां, नलदमुशीरमकरन्दयोः ॥ ३६१ ॥
नर्मदा रेवानर्मल्योर्निषादः श्वपचे स्वरे ।
निर्वादस्त्यक्तेवादे[2] च प्रमदो मुदि मत्तके ॥ ३६२ ॥
प्रमदा स्त्री प्रसादोऽनुग्रहस्वास्थ्यप्रसत्तिषु ।
काव्यगुणे, प्रह्लादस्तु निनादे दानवान्तरे ॥ ३६३ ॥
प्रतिपत्संविदि तिथौ प्रासादो राजमन्दिरे ।
देवतायतने चापि मर्यादा स्थितिसीमयोः ॥ ३६४ ॥
माकन्दः स्यात्सहकारे माकन्द्यामलकीफले ।
मुकुन्दः पारदे रत्नविशेषे गरुडध्वजे ॥ ३६५ ॥
मेनादः केकिनि च्छागे मार्जारे, वरदः पुनः ।
प्रसन्ने शान्तचित्ते च वरदा तु कुमारिका ॥ ३६६ ॥
विशदः पाण्डुरे व्यक्ते शारदो वत्सरे नवे ।
शरद्भवे पतीमुद्गे शालीनेऽप्यथ शारदी ॥ ३६७ ॥
सप्तपर्णाम्बुपिप्पल्योः सम्भेदः सिन्धुसङ्गमे ।
पुष्पादीनां विकासेऽपि स्यात्सुनन्दा[3] तु रोचना ॥ ३६८ ॥
जननी बाहुबलिनोऽपि-

इति त्रिस्वरदान्ताः ।

अगाधो[4]ऽस्ताघरन्ध्रयोः ।
अवधिः स्यादवधाने कालसीमाबिलेष्वपि ॥ ३६९ ॥
आनद्धौ[5] बद्धमुरजावाविद्धः क्षिप्तवक्रयोः ।

---

१ तमोनुद् । २ अपवाद् ।
३ [illegible] । ४ [illegible] । ५ आनिद्धं ।

आबन्धो भूषणे प्रेम्णि बन्धेऽथोत्सेध उच्छ्रये ॥ ३७० ॥
संहननेऽप्युपाधिस्तु धर्मध्याने विशेषणे ।
कुटुम्बव्यापृते छद्मन्युपधिर्व्याजचक्रयोः ॥ ३७१ ॥
कबन्धं सलिले रुण्डे कबन्धो राहुरक्षसोः ।
दुर्विधो दुर्जने निःस्वे न्यग्रोधो वटपादपे ॥ ३७२ ॥
शम्यां व्यामे, न्यग्रोधी तु मोहनाख्यौषधावपि ।
वृषपर्ण्यां, निषधस्तु कठिने पर्वते स्वरे ॥ ३७४ ॥
देशतद्राजयोश्चापि निरोधो नाशरोधयोः ।
प्रसिद्धो भूषिते ख्याते प्रणिधिर्याचने चरे ॥ ३७४ ॥
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ।
मागधो मगधोद्भूते शुक्लजीरकबन्दिनोः ॥ ३७५ ॥
वैश्यतः क्षत्रियापुत्रे मागधी स्यात्तु पिप्पली ।
यूथीभाषाविशेषश्च विबुधः पण्डिते सुरे ॥ ३७६ ॥
विश्रब्धोऽनुद्भटे शान्ते विश्वस्तात्यर्थयोरपि ।
विवधो वीवधो भारे पर्याहाराध्वनोरपि ॥ ३७७ ॥
सम्बाधः सङ्कटे योनौ संरोधः क्षेपरोधयोः ।
सन्नद्धो वर्मिते व्यूढे समाधिः स्यात्समर्थने ॥ ३७८ ॥
चित्तैकाग्र्यनियमयोर्मौने, सन्निधिरन्तिके ।
प्रत्यक्षे चाथ संसिद्धिः सम्यक्सिद्धिस्वभावयोः ॥३७९॥

इति त्रिस्वरधान्ताः ।

अयनं पथि गेहेऽर्कस्योदग्दक्षिणतो गतौ ।
अम्लानस्त्वमले झिण्टीभेदे,ऽर्जुनं तृणे सिते ॥ ३८० ॥
नेत्ररोगे,ऽर्जुनः पार्थे हैहये ककुभद्रुमे ।
मातुरेकसुते चाऽर्जुन्युषा गौः कुट्टिनी सरित् ॥ ३८१ ॥
अङ्गनं प्राङ्गणे यानेऽप्यङ्गना तु नितम्बिनी ।
स्यादपानं गुदेऽपानस्तद्वायावञ्जनं मसौ ॥ ३८२ ॥
रसाञ्जनेऽक्तौ सौवीरेऽथाञ्जनो दिङ्मतङ्गजे ।

अञ्जना हनुमन्मातर्यञ्जनी लेप्ययोषिति ॥ ३८३ ॥
अवनं रक्षणप्रीत्योरर्यमा पितृदैवते ।
तरणौ सूर्यभक्तायामशनिर्वज्रविद्युतोः ॥ ३८४ ॥
अरत्निः कूर्परे पाणौ सप्रकोष्ठततांगुलौ ।
आसनं विष्टरे हस्तिस्कन्धे यात्रानिवर्तने ॥ ३८५ ॥
आसनो जीवकतरावासनी पण्यवीथिका ।
आपन्नः सापदि प्राप्तेऽप्यादानं वाजिभूषणे ॥ ३८६ ॥
ग्रहणेऽथोत्थानं सैन्ये पौरुषे युधि पुस्तके ।
उद्यमोद्गमहर्षेषु वास्त्वन्तेऽङ्गनचैत्ययोः ॥ ३८७ ॥
मलोत्सर्गेऽप्यथोत्तानः सुप्तोन्मुखगभीरयोः ।
उद्यानं स्यान्निःसरणे वनभेदे प्रयोजने ॥ ३८८ ॥
उद्धानमुद्गमे चुल्यामुदानः पवनान्तरे ।
सर्पभिद्युदरावर्ते कमनोऽशोकपादपे ॥ ३८९ ॥
कामिकामाभिरूपेषु कठिनं निष्ठुरोषयोः ।
कठिनी तु खटिका स्यात्कठिना गुडशर्करा ॥ ३९० ॥
कर्तनं योषितां तूलसेवने छेदनेऽपि च ।
क्रन्दनं रोदने ह्वाने कल्पनं क्लृप्तिकर्तने ॥ ३९१ ॥
कल्पनेभसज्जनायां कलापी प्लक्षकेकिनोः ।
कञ्चुकी जाङ्कतरौ महल्ले पन्नगे विटे ॥ ३९२ ॥
काञ्चनं हेम्नि किञ्जल्के काञ्चनो नागकेसरे ।
उदुम्बरे काञ्चनारे पुन्नागे चम्पकेऽपि च ॥ ३९३ ॥
काञ्चनी तु हरिद्रायां कानीनः कन्यकासुते ।
कर्णे व्यासे, काननं तु ब्रह्मास्ये विपिने गृहे ॥ ३९४ ॥
कुहनो मूषिके सेर्ष्ये कुहना दम्भकर्मणि ।
कुण्डली वरुणे सर्पे मयूरे कुण्डलान्विते ॥ ३९५ ॥
केतनं सदने चिन्हे कृत्ये चोपनिमन्त्रणे ।
केसर्यर्वाणि पुन्नागे नागकेसरसिंहयोः ॥ ३९६ ॥

कौपीनं गुह्यदेशे स्यादकार्ये चीवरान्तरे।
कौलीनं जनवादे हि पशुपक्षिशुनां युधि ॥ ३९७ ॥
कार्थगुह्ये[1] कौलीन्ये च गहनं वनगुह्ययोः[2]।
गह्वरे कलिले चापि गन्धनं तु प्रकाशने ॥ ३९८ ॥
सूचनोत्साहहिंसासु गर्जनं स्तनिते क्रुधि ।
गृञ्जनं विषदग्धस्य पशोर्मांसे रसोनके ॥ ३९९ ॥
गोस्तनो हारभेदे स्याद्गोस्तनी हारहूरिका ।
घटना चलनावृत्त्योश्चलनः पादकम्पयोः ॥ ४०० ॥
चलनं कम्पे, चलनी वारीभिद्वस्त्रघर्घरी ।
चन्दनो वानरभिदि श्रीखण्डे, चन्दिनी नदी ॥ ४०१ ॥
चेतनः स्यात्सहृदयः प्राणिनोश्चेतना तु धीः ।
चोलकी तु नागरङ्गे किष्कुपर्वकरीरयोः ॥ ४०२ ॥
छर्दनोऽलम्बुषे निम्बे छर्दनं वमनेऽपि च ।
छदनं पत्रगरुतोश्छेदनं कर्तने भिदि ॥ ४०३ ॥
जयनं विजये श्वादिसन्नाहे, जघनं कटौ ।
स्त्रियाः श्रोणिपुरोभागे जवनो वेगिवेगयोः ॥४०४॥
वेग्यश्वे नीवृति जवन्यपद्यामोषधीभिदि ।
जीवनस्तु पुत्रजीवे जीवनं वृत्तिवारिणोः ॥ ४०५ ॥
स्याज्जीवना तु मेदायां जीवनी तु मधुस्रवा ।
तलिनं विरले स्वच्छे स्तोकेऽथ तपनो रवौ ॥ ४०६ ॥
भल्लाते नरके ग्रीष्मे तलुनो यूनि मारुते ।
तमोघ्नो वह्निसूर्येन्दुबुद्धकेशवशम्भुषु ॥ ४०७ ॥
तपस्वी तापसे दीने तरस्वी वेगिशूरयोः ।
तेमनं व्यञ्जने क्लेदे तेमनी चुल्लिभिद्यपि ॥ ४०८ ॥
तोदनं व्यथने तोत्रे दहनो दुष्टचेष्टिते ।
भल्लाते चित्रकेऽग्नौ च दमनो द्वीपपुष्पयोः ॥ ४०९ ॥

---

१ अकार्यगुह्ये । २ दुःखयोः ।

दर्शनं दर्पणे धर्मोपलब्ध्योर्बुद्धिशास्त्रयोः ।
स्वप्नलोचनयोश्चापि दशनं वर्म्मदंशयोः ॥ ४१० ॥
द्विजन्मा वौ रदे विप्रे दुर्नाम पुनरर्शसि ।
दुर्नामा दीर्घकोश्यां स्याद्देवनोऽक्षेऽथ देवनम् ॥ ४११ ॥
व्यवहारे जिगीषायां क्रीडायां, धमनोऽनले ।
क्रूरे भस्त्राध्मायके च धमनी कन्धरा शिरा ॥ ४१२ ॥
हरिद्रा च धावनं तु गतौ शौचेऽथ नन्दनम् ।
इन्द्रोद्याने, नन्दनस्तु तनये हर्षकारिणि ॥ ४१३ ॥
नलिनं नीलिकातोयाम्बुजेषु, नलिनी पुनः ।
पद्माकरे गङ्गाब्जिन्योर्निधनं कुलनाशयोः ॥ ४१४ ॥
निदानं कारणे शुद्धौ तपसः फलयाचने ।
वत्सदाम्न्यवसाने च प्रधनं युधि दारणे ॥ ४१५ ॥
प्रधानं प्रकृतौ बुद्धावुत्ताने परमात्मनि ।
महामात्रे, प्रसूनं तु प्रसूते फलपुष्पयोः ॥ ४१६ ॥
प्रज्ञानं बुद्धौ चिह्ने च स्यात् प्रसन्नं प्रसादवत् ।
प्रसन्ना तु मदिरायां पवनो वायुवल्लयोः ॥ ४१७ ॥
पवनं पुनरापाके पद्मिनी योषिदन्तरे ।
अब्जेऽब्जिन्यां सरस्यां च पावनं जलकृच्छ्रयोः ॥४१८॥
पावनः पावके सिद्धेऽध्यासे पावयितर्यपि ।
पावनी तु हरीतक्यां पाठीनो गुग्गुलुद्रुमे ॥ ४१९ ॥
पाठके मीनभेदे च प्रार्थना याचने स्मृता ।
अभियाने रोधने च पिशुनः सूचके खले ॥ ४२० ॥
कप्यास्ये, पिशुना स्पृक्का स्यात् पिशुनं तु कुङ्कुमम् ।
पीतनं तु हरिताले पीतदारुणि कुङ्कुमे ॥ ४२१ ॥
पीतनः पुनराम्राते पूतना तु हरीतकी ।
वध्या च वासुदेवस्य पृतनाऽनीकिनी चमूः ॥ ४२२ ॥
सेना सैन्यविशेषश्च फाल्गुनो मासपार्थयोः

नदीजेऽर्जुने वृक्षे च फाल्गुनी पूर्णिमाभिदि ॥ ४२३ ॥
भवनं सदने भावे भण्डनं कवचे युधि ।
खलीकारे, भट्टिनी तु ब्राह्मण्यां नृपयोषिति ॥ ४२४ ॥
भावना वासना ध्यानं भुवनं लोकखाम्बुषु ।
भूतात्मा द्रुहिणे देहे मदनः सिक्थके स्मरे ॥ ४२५ ॥
जले वसन्ते धत्तूरे मलिनं कृष्णदोषयोः ।
मलिनी रजस्वलायां मण्डनं तु प्रसाधने ॥ ४२६ ॥
मण्डनोऽलङ्करिष्णौ स्यान्मार्जनो लोध्रशाखिनि ।
मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ ॥ ४२७ ॥
मालिन्युमायां गङ्गायां चम्पावृत्तप्रभेदयोः ।
मालिक्यां, मिथुनो राशौ मिथुनं पुंस्त्रियोर्युगे ॥ ४२८ ॥
मुण्डनं रक्षणे क्षौरे मेहनं मूत्रशिश्नयोः ।
मैथुनं रतसङ्गत्योर्यमनं दमबन्धयोः ॥ ४२९ ॥
यापनं कालविक्षेपे निराशे वर्तनेऽपि च ।
योजनं तु चतुःक्रोश्यां स्याद्योगपरमात्मनोः ॥ ४३० ॥
रसनं ध्वनिते स्वादे रसज्ञारास्नयोरपि ।
रञ्जनं रजके रक्तचन्दनेऽप्यथ रञ्जनी ॥ ४३१ ॥
मञ्जिष्ठारोचनानीलीगुडासु, रजनी निशि ।
लाक्षानीलीहरिद्रासु राधनं प्राप्तितोषयोः ॥ ४३२ ॥
साधने, रेचनी गुन्द्रा दन्ती रोचनिका त्रिवृत् ।
रोदनं त्वश्रुणि क्रन्दे रोचनः कूटशाल्मलौ ॥ ४३३ ॥
रोचना रक्तकह्लारे गोपित्ते वरयोषिति ।
लङ्घनं भोजनत्यागे लवने क्रमणेऽपि च ॥ ४३४ ॥
ललामवल्ललामाऽश्वे शृङ्गे चिन्हपताकयोः ।
रम्येय प्रधाने भूषायां पुण्ड्रे पुच्छप्रभावयोः ॥ ४३५ ॥
ललना स्त्री नाडिजिह्वा लाञ्छनं लक्ष्मसंज्ञयोः ।
लाङ्गली स्याद्धलभद्रे नालिकेरेऽथ लेखनम् ॥ ४३६ ॥

भूर्जे छेदे लिपिन्यासे व्यसनं निष्फलोद्यमे ।
दैवानिष्टफले सक्तौ स्त्रीपानमृगयादिषु ॥ ४३७ ॥
पापे विपत्तावशुभे व्यञ्जनं श्मश्रुचिन्हयोः ।
तेमनेऽवयवे कादौ वमनं छर्दनेऽर्दने ॥ ४३८ ॥
वसनं छादने वस्त्रे वर्जनं त्यागहिंसयोः ।
वर्द्धनं छेदने वृद्धौ वर्द्धनी तु गलन्तिका ॥ ४३९ ॥
वपनं मुण्डने बीजाधानेऽथ वर्तनी पथि ।
वर्तने तर्कुपिण्डे[1] वा वनश्वाऽभिप्रतारके ॥ ४४० ॥
शार्दूले गन्धमार्जारे वामनो दिग्गजेऽच्युते ।
खर्वेऽङ्कोठे, वाहिनी तु सेनातद्भेदसिन्धुषु ॥ ४४१ ॥
स्याद्वाणिनी तु नर्तक्यां छेकमत्तास्त्रियोरपि ।
वितानं कदके यज्ञे विस्तारे क्रतुकर्मणि ॥ ४४२ ॥
तुच्छे मन्दे वृत्त[2]शून्ये शून्यावसथयोरपि ।
विज्ञानं कार्मणे ज्ञाने विलग्नं मध्यलग्नयोः ॥ ४४३ ॥
विक्लिन्नो जीर्णशीर्णार्द्रे विलीनौ लीनविद्रुतौ ।
विषघ्नः शिरीषतरौ विषघ्ना त्रिवृता मृता ॥ ४४४ ॥
विच्छिन्नं तु कुटिले स्यात् समालब्धविभक्तयोः ।
विमानं देवतायाने सप्तभूमिगृहेऽपि च ॥ ४४५ ॥
विधानं हस्तिकवले प्रेरणेऽभ्यर्चने धने ।
चे[3]तनोपायविधिषु प्रकारे वैरकर्मणि ॥ ४४६ ॥
विपन्नो भुजगे नष्टे विश्वप्सा वह्निचन्द्रयोः ।
समीरणे कृतान्ते च विलासी भोगिसर्पयोः ॥ ४४७ ॥
विषयी विषयासक्ते वैषयिकजने नृपे ।
कामे विषयिहृषीके व्युत्थानं प्रतिरोधने ॥ ४४८ ॥
विरोधाचरणे स्वैरवृत्तौ समाधिपारणे ।
वृजिनः केशे, वृजिनं भुग्नेऽघे रक्तचर्मणि ॥ ४४९ ॥
वेष्टनं मुकुटे कर्णशष्कुल्युष्णीषयोर्वृतौ ।

१ तर्कुपीठे । २ वृत्तभेदे । ३ चेतना ।

वेदना ज्ञाने पीडायां शयनं स्वापमैथुनयोः ॥ ४५० ॥
रते, शमनस्तु यमे शमनं शान्तिहिंसयोः ।
श्वसनं श्वासे, श्वसनः पवने मदनद्रुते ॥ ४५१ ॥
शकुनं स्याद्दैवशंसिनिमित्ते, शकुनः खगे ।
शकुनिः खगे करणभेदे कौरवमातुले ॥ ४५२ ॥
शतघ्नी तु वृश्चिकाल्यां शस्त्रभेदकरञ्जयोः ।
शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु ॥ ४५३ ॥
शिखरी कोटकोयष्ट्योर्द्रुमेऽपामार्गशैलयोः ।
शिखण्डी कुक्कुटे चित्रमेखले बर्हिबर्हयोः ॥ ४५४ ॥
भीष्मारौ बाणे, शृङ्गारी सुवेषे क्रमुके द्विपे ।
श्लेष्मघ्नी स्यान्माल्लिकायां कम्पिल्लकफणिज्जयोः ॥ ४५५ ॥
शोभनः सुन्दरे योगे सवनं स्नानयोगयोः ।
सोमनिर्दलने चापि सदनं जलसद्मनोः ॥ ४५६ ॥
स्तननं क्रन्दने मेघगर्जितध्वनिमात्रयोः ।
स्पर्शनं हृषीके दाने स्पर्शे च स्पर्शनोऽनिले ॥ ४५७ ॥
स्यन्दनं स्रवणे तोये स्यन्दनास्तिनिशे रथे ।
संव्यानं छादने वस्त्रे समानो देहमारुते ॥ ४५८ ॥
वर्णभित्सत्समैकेषु सन्तानोऽपत्यगोत्रयोः ।
सन्ततौ देववृक्षे च संस्थानं त्वाकृतौ मृतौ ॥ ४५९ ॥
चतुष्पथे सन्निवेशे सज्जनं घट्टगुल्मके ।
सज्जनस्तु कुलीने स्यात्सज्जनाऽपि च कल्पना ॥ ४६० ॥
सन्धानं तु सङ्घटनेऽभिषवे, सन्धिनी तु गौः ।
वृषाक्रान्ता कालदुग्धा स्थापनं तु निवेशने ॥ ४६१ ॥
पुंसवने समाधौ च साधनं सिद्धिसैन्ययोः ।
उपायेऽपगमे मेढ्रे निवृत्तौ कारके वधे ॥ ४६२ ॥
दीपने मृतसंस्कारे प्रमाणे गमने धने ।
सुकर्मा योगभेदे स्यात्सत्क्रिये देवशिल्पिनि ॥ ४६३ ॥

सुदामा पर्वते मेघे सुधन्वा त्वष्टृधन्विनोः ।
सुपर्वा पर्वणि शरे त्रिदशे वंशधूमयोः ॥ ४६४ ॥
सूचना स्यादभिनये गन्धने व्यधने दृशि ।
सेवनं सीवनोपास्त्योः सेनानीः सैन्यपे गुहे ॥ ४६५ ॥
हसन्यङ्गारधान्यां स्याद्धसनं हसिते मतम् ।
हस्तिनी नायिकाभेदे मातङ्गस्य स्त्रियामपि ॥ ४६६ ॥
हायनोऽचिर्व्रीहिर्वर्षे ह्रादिनी वज्रविद्युतोः ।
हिण्डनं क्रीडारतयोर्याने-

इति त्रिस्वरनान्ताः ।

अनूपस्तु सैरिभे ॥ ४६७ ॥
जलप्रायेऽप्यथाऽऽवापः पानभेदालवालयोः ।
प्रक्षेपे भाण्डपवने[1]ऽप्याक्षेपः परिभर्त्सने ॥ ४६८ ॥
काव्यालङ्करणाकृष्ट्योः स्यादाकल्पः प्रसाधने[2] ।
कल्पने वाप्युलपस्तु गुल्मिनीतृणभेदयोः ॥ ४६९ ॥
उडुपः प्लवशीतांश्वोः कलापो बर्हितूणयोः ।
संहतौ भूषणे काञ्च्यां कच्छपो मल्लबन्धने[3] ॥ ४७० ॥
कमठे, कच्छपी वीणाकशिपुर्भोज्यवस्त्रयोः ।
एकैकस्मिन्द्वयोश्चापि कश्यपो मुनिमीनयोः ॥ ४७१ ॥
काश्यप्युर्व्यां, कुतपस्तु छागकम्बलदर्भयोः ।
वैश्वानरे दिनकरे द्विजन्मन्यतिथौ गवि ॥ ४७२ ॥
भागिनेयेऽष्टमांशेऽह्नो वाद्येऽथ कुटपो मुनौ ।
निष्कुटे मानभेदे च कुणपः पूतिगन्धिनि ॥ ४७३ ॥
शवे, जिह्वापस्तु शुनि व्याघ्रे द्वीपिबिडालयोः ।
प्रतापस्तेजसि स्वेदे पादपो वृक्षपीठयोः ॥ ४७४ ॥
रक्तपो रक्षो, रक्तपा तु जलौका, विटपः पुनः ।
पल्लवेऽपि च वृक्षे[4]षु विस्तारे षिड्गशाखयोः ॥ ४७५ ॥

---

१ पचने । २ मण्डने । ३ बन्धके । ४ वक्षे च ।

सुरूपस्तु बुधे रम्ये प्राप्तरूपाभिरूपवत् ।

इति त्रिस्वरपान्ताः ।

कदम्बः सर्षपे नीपे कदम्बं निकुरम्बके ॥ ४७६ ॥
कलम्बो नालिकाशाके पृषत्के नीपपादपे ।
कादम्बः कलहंसेष्वोः नितम्बः कटिरोधसोः ॥ ४७७ ॥
स्त्रियाः पश्चात्कटौ सानौ प्रलम्बस्तु प्रलम्बनम् ।
दैत्यस्तालाङ्कुरः शाखा प्रालम्बस्तु पयोधरे ॥ ४७८ ॥
त्रपुषे हारभेदे च भूजम्बूस्तु विकङ्कते ।
गोधूमाह्वयधान्ये च हेरम्बः शौर्यगर्विते ॥ ४७९ ॥
महिषे विघ्नराजे वा-

इति त्रिस्वरबान्ताः ।

आरम्भस्तु वधदर्पयोः ।
त्वरायामुद्यमे वाऽप्यात्मभूर्ब्रह्मणि मन्मथे ॥ ४८० ॥
ऋषभः स्यादादिजिने वृषभे भेषजे स्वरे ।
कर्णरन्ध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरस्थितः ॥ ४८१ ॥
ऋषभी तु शूकशिम्ब्यां पुरुषाकारयोषिति ।
विधवायां शिरालायां करभो मृग उष्ट्रके ॥ ४८२ ॥
अङ्गुलेश्च कनिष्ठायां मणिबन्धस्य चान्तरे ।
ककुभो वीणाप्रसेवे रागभेदेऽर्जुनद्रुमे ॥ ४८३ ॥
कुसुम्भं तु शीतकुम्भे स्याल्लद्वायां कमण्डलौ ।
गर्दभो रासभे गन्धे गर्दभी जन्तुरुग्भिदोः ॥ ४७४ ॥
गर्दभं कुमुदश्वेते दुर्लभः कच्छुरे प्रिये ।
दुष्प्रापे, दुन्दुभिस्तु स्याद्भेर्यां दितिसुते विषे ॥ ४८५ ॥
अक्षबिन्दुत्रिकद्वन्द्वे निकुम्भः कुम्भकर्णजे ।
दन्त्यां च वल्लभोऽध्यक्षे कुलीनाश्वे प्रियेऽपि च ॥ ४८६ ॥
वर्षाभूः पुनर्नवायां स्याद्गण्डूपदभेकयोः ।
विष्कम्भो विस्तृतौ योगविशेषप्रतिबन्धयोः ॥ ४८७ ॥

---

१ मय । २ कुमुदस्वेते ।

योगिनां च बन्धभेदे रूपकावयवेऽपि च ।
विस्रम्भः केलिकलहे विश्वासे प्रणये वधे ॥ ४८८ ॥
वृषभः स्यादादिजिने वृषपुङ्गवयोरपि ।
सनाभिर्ज्ञातिसदृशोः सुरभिर्हेम्नि चम्पके ॥ ४८९ ॥
जातीफले मातृभेदे रम्ये चैत्रवसन्तयोः ।
सुगन्धौ गवि शल्लक्याम्

इति त्रिस्वरभान्ताः ।

अधमो न्यूनगर्ह्ययोः ॥ ४९० ॥
आगमं त्वागतौ शास्त्रे आश्रमो व्रतिनां मठे ।
ब्रह्मचर्यादिचतुष्केऽप्युत्तमा दुग्धिकौषधौ[1] ॥ ४९१ ॥
उत्तमं तु प्रधाने स्यात् कलमः शालिचौरयोः ।
कुसुमं स्त्रीरजोनेत्ररोगयोः फलपुष्पयोः ॥ ४९२ ॥
कृत्रिमं लवणभेदे कृत्रिमः कृतसिह्लयोः ।
गोधूमो भेषजे नागरङ्गव्रीहिविशेषयोः[2] ॥ ४९३ ॥
गोलोमी वारयोषायां षड्ग्रन्थासितदूर्वयोः ।
गौतमो गणभृद्भेदे शाक्यसिंहर्षिभेदयोः ॥ ४९४ ॥
गौतम्युमायां रोचन्यां तलिमं तल्पखड्गयोः ।
विताने कुट्टिमे चापि दाडिमः करकैलयोः ॥ ४९५ ॥
निष्क्रमो निर्गमे बुद्धिसम्पत्तौ दुःकुलेऽपि च ।
नियमः स्यात्प्रतिज्ञायां निश्चये यन्त्रणे व्रते ॥ ४९६ ॥
निगमाः पूर्वणिग्भेदनिश्चयाध्ववणिक्पथाः ।
नैगमो नयपौरोपनिषद्दातिषु वाणिजे ॥ ४९७ ॥
प्रथमः स्यात्प्रधानाद्याः प्रक्रमोऽवसरे क्रमे ।
पञ्चमः पूरणे[3] दक्षे पञ्चानामपि पूरणे ॥ ४९८ ॥
रागभेदे, पञ्चमी तु द्रौपद्यां, परमः परे ।
अग्रेसरप्रधानयोरोङ्कारे, परमं पुनः ॥ ४९९ ॥

---

१ ओषधे ।     २ प्रभेदयोः ।     ३ रुचिरे ।

स्यादव्ययमनुज्ञायां प्रतिमा[1] प्रतिरूपके ।
गजस्य दन्तबन्धे च मध्यमो मध्यजे स्वरे ॥ ५०० ॥
देहमध्ये मध्यदेशे मध्यमा कर्णिकाङ्गुलिः ।
राका रजस्वला चापि व्यायामः पौरुषे श्रमे ॥ ५०१ ॥
वियामे दुर्गसञ्चारे विलोममरघट्टके ।
विलोमो वरुणे सर्पे प्रतीपे कुक्कुरेऽपि च ॥ ५०२ ॥
विलोमी स्यादामलक्यां विक्रमः शक्तिसम्पदि ।
क्रान्तौ च विद्रुमो वृक्षे प्रवालेऽप्यथ विभ्रमः ॥ ५०३ ॥
शोभायां संशये हावे सत्तमः श्रेष्ठपूज्ययोः ।
साधिष्ठे, संभ्रमो भीतौ संवेगादरयोरपि ॥ ५०४ ॥
सुषीमः शिशिरे रम्ये सुषमं रुचिरे समे ।
सुषमा तु स्यात्परमशोभायां कालभिद्यपि ॥ ५०५ ॥

इति त्रिस्वरमान्ताः ।

अत्ययोऽतिक्रमे दोषे विनाशे दण्डकृच्छ्रयोः ।
अवध्यमवधार्हे स्यादनर्थकवचस्यपि ॥ ५०६ ॥
अभयमुशीराभीत्योरभया तु हरीतकी ।
अनयोऽशुभदैवे स्याद्विपद्व्यसनयोरपि ॥ ५०७ ॥
अश्वीयमश्वसङ्घेऽश्वहितेऽधृष्यः प्रगल्भके ।
अधृष्या निम्नगाभेदेऽहल्या गौतमयोषिति ॥ ५०८ ॥
सरोभेदेऽप्यभिख्या तु शोभायां कीर्तिसंज्ञयोः ।
अहार्यो हर्तुमशक्ये शैलेऽथाशय आश्रये ॥ ५०९ ॥
अभिप्रायपनसयोरादित्यस्त्रिदशार्कयोः ।
आत्रेयो मुनिरात्रेयी पुष्पवत्यां सरिद्भिदि ॥ ५१० ॥
आतिथ्योऽतिथौ तद्योगेऽप्याम्नायः कुल आगमे ।
उपदेशे, चेन्द्रियं तु चक्षुरादिषु रेतसि ॥ ५११ ॥
उदयः पर्वतोन्नत्योरूर्णायुरविकम्बले ।
ऊर्णानाभे च मेषे चैणेयमेणीत्वगादिके ॥ ५१२ ॥

---

१ प्रतिमः ।

रतबन्धादिषु स्त्रीणां कषायः सुरभौ रसे ।
रागवस्तुनि निर्यासे क्रोधादिषु विलेपने ॥ ५१३ ॥
वर्णे, कालेयस्तु दैत्ये कालेयं कुङ्कुमं यकृत् ।
कुकृत्यमनुतापे स्यादयुक्तकरणेऽपि च ॥ ५१४ ॥
कुलायः पक्षिणां स्थानगेहयोः क्षेत्रियास्त्रयः ।
अन्यदेहचिकित्साहाऽसाध्यरुक्पारदारिकाः ॥ ५१५ ॥
क्षेत्रियं क्षेत्रजतृणे गाङ्गेयं स्वर्णमुस्तयोः ।
कशेरुण्यथ गाङ्गेयो गाङ्गवत्स्कन्दभीष्मयोः ॥ ५१६ ॥
चक्षुष्यः सुभगे पुण्डरीकवृक्षे रसाञ्जने ।
केतकेऽक्षिहिते चापि चक्षुष्या तु कुलत्थिका ॥ ५१७ ॥
चाम्पेयो हेम्नि किञ्जल्के चम्पके नागकेसरे ।
जघन्यं शिश्ने गर्ह्येऽन्त्ये जययुर्गुग्गुलौ खगे ॥ ५१८ ॥
तपस्यः फाल्गुने[4] मासे तपस्या नियमस्थितौ ।
द्वितीया तिथिगेहिन्योर्द्वितीयः पूरणे द्वयोः ॥ ५१९ ॥
नादेयी भूमिजम्बां स्यान्नारङ्गे जलवेतसे ।
काङ्गुष्ठे च जपायां च निकायः सद्मसङ्घयोः ॥ ५२० ॥
परमात्मनि लक्ष्ये च निलयोऽस्तमये गृहे ।
गोपनस्य प्रदेशेऽपि नेपथ्यं तु प्रसाधने ॥ ५२१ ॥
रङ्गभूमौ वेषभेदे प्रणयः प्रेमयाच्ञयोः ।
विस्रम्भे प्रसरे चापि प्रत्ययो ज्ञानरन्ध्रयोः ॥ ५२२ ॥
विश्वासे शपथे हेतावाचारप्रथितत्वयोः ।
अधीने निश्चये स्यादौ प्रणाय्यः कामवर्जिते ॥ ५२३ ॥
असंमते, प्रसव्यस्तु प्रतिकूलानुकूलयोः ।
प्रतीक्ष्यः प्रतिपाल्यै स्यात्पूज्ये च प्रलयो मृतौ ॥ ५२४ ॥
संहारे नष्टचेष्टत्वे पर्यायोऽवसरे क्रमे ।
निर्माणे द्रव्यधर्मे च पर्जन्यो गर्जदम्बुदे ॥ ५२५ ॥

---

१ रतबन्धप्रभेदेपि ।  २ कतके ।
३ गर्हिते ।  ४ फाल्गुनमासे ।

वासवे मेघशब्दे च पयस्यं तु पयोभवे ।
पयोहिते, पयस्या तु काकोली दुग्धिकाऽपि च ॥ ५२६ ॥
प्रक्रिया तूत्पादने स्यादधिकारप्रकारयोः ।
पानीयं पेयजलयोः पारुष्यस्तु बृहस्पतौ ॥ ५२७ ॥
पारुष्यं परुषभावे सङ्क्रन्दनवनेऽपि च ।
पौलस्त्यो रावणे श्रीदे भ्रातृव्यो भ्रातृजे रिपौ ॥ ५२८ ॥
भुजिष्यः स्यादनधीने किङ्करे हस्तसूत्रके ।
भुजिष्या गणिकादास्योर्भुवन्युर्वह्निसूर्ययोः ॥ ५२९ ॥
मलयो देश आरामे शैलांशे पर्वतान्तरे ।
मलया त्रिवृत्, मङ्गल्यस्त्रायमाणे मसूरके ॥ ५३० ॥
बिल्वे, मङ्गल्यं तु दध्नि मङ्गल्या रोचना शमी ।
शतपुष्पा शुक्लवचा प्रियङ्गुः शङ्खपुष्प्यपि ॥ ५३१ ॥
अधःपुष्पी, मृगयुस्तु फेरौ ब्रह्मणि लुब्धके ।
रहस्यं गोपनीये च रहस्या सरिदन्तरे ॥ ५३२ ॥
लौहित्योऽब्धौ नदे व्रीहौ ब्रह्मण्यो ब्रह्मणो हिते ।
शनैश्चरे, व्यवायस्तु मैथुनव्यवधानयोः ॥ ५३३ ॥
वदान्यः प्रियवाग्दानशीलयोरुभयोरपि ।
वक्तव्यो वाच्यवद्गर्ह्ये वचोऽर्हहीनयोरपि ॥ ५३४ ॥
वलयः कङ्कणं कण्ठरुग्, वालेयस्तु गर्दभे ।
वल्यर्थे कोमलेऽङ्गारवल्लर्यां, विजयो जये ॥ ५३५ ॥
पार्थे विमाने, विजयोमातृसख्योस्तिथावपि ।
विषयो यस्य यो ज्ञातस्तत्र गोचरदेशयोः ॥ ५३६ ॥
शब्दादौ जनपदे च विस्मयोऽद्भुतदर्पयोः ।
विनयः शिक्षाप्रणत्योर्विनया तु बलौषधौ ॥ ५३७ ॥
विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च ।
शल्येन रहितायां च प्रियायां लक्ष्मणस्य च ॥ ५३८ ॥
श्वशुर्यो देवरे श्याले शाण्डिल्यः पावकान्तरे ।

बिल्वे मुनौ च शालेयं शतपुष्पाह्वयौषधे ॥ ५३९ ॥
क्षेत्रे च शालिधान्यस्य शीर्षण्यं शीर्षरक्षणे ।
शीर्षण्यो विशदकचे शैलेयं शैलसम्भवे ॥ ५४० ॥
सिन्धूत्थे, तालपर्ण्यां च शैलेयस्तु मधुव्रते ।
समयः शपथे भाषासम्पदोः कालसंविदोः ॥ ५४१ ॥
सिद्धान्ताचारसङ्केतनियमावसरेषु च ।
क्रियाकारे च निर्देशे संस्त्यायो विस्तृतौ गृहे ॥ ५४२ ॥
सन्निवेशे, संन्नयस्तु समवायानुसैन्ययोः ।
सामर्थ्ययोग्यताशक्त्योः सौकर्यं तु विना श्रमे ॥ ५४३ ॥
सूकरस्य क्रियायां च सौरभ्यं गुणगौरवे ।
सौगन्ध्ये चारुतायां च हिरण्यं पुनरक्षये ॥ ५४४ ॥
प्रधानधातौ कनके मानभेदे कपर्दके ।
द्रविणाकुप्ययोश्चापि हृच्छयो मन्मथात्मनोः ॥ ५४५ ॥
हृदयं वक्षसि स्वान्ते बुक्कायाम्–

इति त्रिस्वरयान्ताः ।

अमरः सुरे ।

स्नुहीवृक्षेऽस्थिसंहारेऽप्यमरा त्वमरावती ॥ ५४६ ॥
स्थूणा दुर्वा गुडूची वाऽन्तरं रन्ध्रावकाशयोः ।
मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ ॥ ५४७ ॥
आत्मीयात्मपरिधानान्तर्धिबाह्येष्वथाऽवरम् ।
चरमेऽवरा तु गौरीगजजङ्घान्त्यदेशयोः ॥ ५४८ ॥
अक्षरं स्यादपामार्गे परमब्रह्मवर्णयोः ।
गगने धर्मतपसोरध्वरे मूलकारणे ॥ ५४९ ॥
अधरोऽनूर्ध्वहीनोष्ठे अध्वरः सावधानके ।
वसुभेदे क्रतौ चाप्यथाऽम्बरं व्योमवस्त्रयोः ॥ ५५० ॥
कार्पासे सुरभिद्रव्येऽररं छदकपाटयोः ।
अङ्कुरो रोम्णि सलिले रुधिरेऽभिनवोद्गमे ॥ ५५१ ॥

अजिरं दर्दुरे कार्ये विषये प्राङ्गणेऽनिले ।
अशिरोऽर्के राक्षसेऽग्नावङ्गारोऽलातभौमयोः ॥ ५५२ ॥
अण्डीरः शक्तनरयोरसुरः सूर्यदैत्ययोः ।
असुरा रजनीराश्योरगुरुर्जोङ्गके लघौ ॥ ५५३ ॥
शिंशपाया,मवीरा तु नारी पतिसुतोज्झिता ।
रजसा संयुताऽप्युक्ताहार आवरणेऽशने ॥ ५५४ ॥
आसारो वेगवद्वर्षे सुहृद्बलप्रसारयोः ।
आकार इङ्गिताकृत्योराधारो जलधारणे ॥ ५५५ ॥
आलवालेऽधिकरणेऽप्याकरो निकरे खनौ ।
इतरः पामरेऽन्यस्मिन्नित्वरः क्रूरकर्मणि ॥ ५५६ ॥
पथिके दुर्विधे नीचे स्यादित्वर्यभिसारिका ।
ईश्वरः स्वामिनि शिवे मन्मथेऽपीश्वराऽद्रिजा ॥ ५५७ ॥
उदरं तुन्दरणयोरुत्तरं प्रवरोर्ध्वयोः ।
उदीच्यप्रतिवचसोरुत्तरस्तु विराटजे ॥ ५५८ ॥
उत्तरा दिगुदीच्यां स्यात्स्नुषायामर्जुनस्य च ।
उद्धारः स्यादृणोद्धृत्योरुदारो दक्षिणो महान् ॥ ५५९ ॥
दातोर्वरा तु भूमात्रे सर्वसस्याढ्यभुव्यपि ।
ऋक्षरं वारिधारायामृक्षरः पुन ऋत्विजि ॥ ५६० ॥
एकाग्रौ तद्गताव्यग्रावौशीरं शयनासने ।
उशीरजे चामरे च दण्डे च, कररः खगे ॥ ५६१ ॥
करीरे क्रकचे दीने कर्बुरं काञ्चने जले ।
कर्बुरो राक्षसे पापे शबले, कदरोऽङ्कुशे ॥ ५६२ ॥
विवरे च गुहायां च कर्करो मुकुरे दृढे ।
कदरः श्वेतखदिरे क्रकचक्षुद्ररोगयोः ॥ ५६३ ॥
कर्परस्तु कटाहे स्याच्छस्त्रभेदकपालयोः ।
कर्चुरं कुत्सिते तक्रे कडारो दासपिङ्गयोः ॥ ५६४ ॥
कञ्जारः कुञ्जरे सूर्ये जठरे द्रुहिणे मुनौ ।

करीरः कलशे वंशाङ्कुरवृक्षविशेषयोः ॥ ५६५ ॥
कलत्रं श्रोणौ भार्यायां दुर्गस्थाने च भूभुजाम् ।
कटित्रं तु कटीवस्त्रे रशनाचर्मभेदयोः ॥ ५६६ ॥
कच्छुरः पुंश्चले पामासहिते, कच्छुरा सटी ।
दुस्पर्शा शूकशिम्बी च कबरं लवणाम्लयोः ॥ ५६७ ॥
कबरी केशविन्यासशाकयोः, कन्धरोऽम्बुदे ।
कन्धरा तु शिरोधौ स्यात् कसेरुः पृष्ठकीकसे ॥ ५६८ ॥
तृणजातौ कन्दभेदे कणेरुस्तु गणेरुवत् ।
वेश्येभीकर्णकारेषु कटप्रूरक्षदेवने ॥ ५६९ ॥
विद्याधरेऽस्त्रपे रुद्रे कर्चूरं शाटितालयोः ।
कठोरौ पूर्णकठिनौ कान्तारं दुर्गवर्त्मनि ॥ ५७० ॥
महारण्योपसर्गाढ्योः काननेक्षुविशेषयोः ।
काश्मीरं पुष्करमूले टङ्ककुङ्कुमयोरपि ॥ ५७१ ॥
कावेरी तु हरिद्रायां वेश्यायां सरिदन्तरे ।
किर्मीरः शबले दैत्ये किशोरी हयशावके ॥ ५७२ ॥
सूर्ये यून्यथ किंशारुर्धान्यशूके शरेऽपि च ।
कुहरं गह्वरे छिद्रे कुक्कुरं ग्रन्थिपर्णके ॥ ५७३ ॥
कुक्कुरः श्वा, कुबेरस्तु धनदे नन्दिपादपे ।
कूर्परौ जानुकफोणी कुमारोऽश्वानुचारके ॥ ५७४ ॥
युवराजे शिशौ स्कन्दे शुके वरुणपादपे ।
कुमारं जात्यकनके कुमारी त्वपराजिता ॥ ५७५ ॥
नदीभिद्रामतरणी कन्यका नवमाल्युमा ।
जम्बूद्वीपविभागश्च कुठारं केवले रते ॥ ५७६ ॥
कुञ्जरोऽनेकपे कोशे कुञ्जरा धातकीद्रुमे ।
पाटलायां, कुठारुर्द्रुकीशयोः, कूवरः पुनः ॥ ५७७ ॥
कुब्जे युगन्धरे रम्ये केसरो नागकेसरे ।
तुरङ्गसिंहयोः स्कन्धकेशेषु बकुलद्रुमे ॥ ५७८ ॥

१ कर्पर ।

पुन्नागवृक्षे किञ्जल्के स्यात् केसरं तु हिङ्गुनि ।
केदारः क्षेत्रभिद्यालवाले, शङ्करशैलयोः ॥ ५७९ ॥
केनारः कुम्भिनरके शिरःकपालसन्धिषु ।
कैटिरः[1] शक्रगोपे स्यान्नकुले पाकशासने ॥ ५८० ॥
कोट्टारो नागरे कूपे पुष्करिण्याश्च पाटके ।
खर्परं तस्करे भिक्षापात्रे धूर्त्तकपालयोः ॥ ५८१ ॥
खपुरो मुस्तके पूगेऽलसके, खपुरं घटे ।
खर्जूरं रूप्यफलयोः खर्जूरः कीटवृक्षयोः ॥ ५८२ ॥
खण्डाभ्रमभ्रावयवे स्त्रीणां दन्तक्षताक्षरे ।
खदिरी शाके, खदिरो दन्तधावनचन्द्रयोः ॥ ५८३ ॥
खिङ्खिरस्तु शिवाभेदे खट्वाङ्गे वारिवालके ।
खिखीरावत् बहुत्वे च गह्वरं बिलदम्भयोः ॥ ५८४ ॥
कुञ्जेऽथ गर्गरो मीने स्याद् गर्गरी तु मन्थनी ।
गान्धारो रागसिन्दूरस्वरेषु नीवृदन्तरे ॥ ५८५ ॥
गायत्री खदिरे छन्दविशेषे, गोपुरं पुनः ।
मुस्तके द्वारि पूर्द्वारे घर्घरस्तु नदान्तरे ॥ ५८६ ॥
चलद्वारिध्वनौ घूके चन्दिरश्चन्द्रहस्तिनोः ।
चत्वरं स्यात्पथां श्लेषे स्थण्डिलाजिरयोरपि[2] ॥ ५८७ ॥
चङ्कुरः स्यन्दने वृक्षे चतुरो नेत्रगोचरे ।
चाटुकारे बुधे चक्रगण्डे चातुरको ऽथा ॥ ५८८ ॥
चमरश्चामरे दैत्ये चमरी तु मृगान्तरे ।
चिकुरोऽहौ गृहबभ्रौ केशे चञ्चलशैलयोः ॥ ५८९ ॥
पक्षिवृक्षभिदोश्चापि छिदिरोऽग्नौ परश्वधे ।
करवाले च रज्जौ च छित्वरो दैत्यधूर्त्तयोः ॥ ५९० ॥
छित्वरं छेदने द्रव्ये जठरः कुक्षिवृद्धयोः ।
कठिने च जर्जरं तु वासवध्वजजीर्णयोः ॥ ५९१ ॥
जम्बीरः मरुथपुष्पाख्यशाके दन्तशठद्रुमे ।

---

१ कैटिम । २ अंगण ।

जलन्द्रा जम्भकेऽम्भोधौ वरुणेऽप्यथ झर्झरः ॥ ५९२ ॥
वाद्ये नदे कलियुगे झल्लरीवत्तु झर्झरी ।
वाद्यभेदे केशचक्रे टङ्कारो ज्यारवेऽद्भुते ॥ ५९३ ॥
प्रसिद्धौ चाथ टगरष्टङ्कणे केकराक्षके ।
टट्टरी त्वनृताख्याने लम्पापटहवाद्ययोः ॥ ९९४ ॥
तमिस्रं तिमिरे कोपे तमिस्रा दर्शयामिनी ।
तमस्तति,स्तिमिरं तु दृष्टिरोगान्धकारयोः ॥ ५९५ ॥
तित्तिरिः पक्षिणि मुनौ तुषारो हिमदेशयोः ।
शीकरे हिमभेदे च तुम्बुरी धन्याकं शुनी ॥ ५९६ ॥
तूवरोऽश्मश्रुपुरुषेऽप्रौढाश्रृङ्गानडुह्यपि ।
दहरो मूषिका ह्यल्पो भ्राता डिम्बोऽथ दन्तुरः ॥ ५९७ ॥
उन्नतदन्ते विषमे दर्दुरो भेकमेघयोः ।
वाद्यभेदे शैलभेदे दर्दुरं ग्रामजालके ॥ ५९८ ॥
दर्दुरोमा, दर्दरः स्यादीषद्भग्ने गिरावपि ।
दण्डारो वहने मत्तवारणे शरयन्त्रके ॥ ५९९ ॥
कुम्भकारस्य यंत्रे च द्वापरं संशये युगे ।
दासेर उष्ट्रे चेटे च दुर्द्धरस्त्वृषभौषधौ ॥ ६०० ॥
दुःखधार्य्ये, धूसरस्तु रासभे स्तोकपाण्डुरे ।
नरेन्द्रो वार्त्तिके राज्ञि विषवैद्येऽथ नागरम् ॥ ६०१ ॥
शुण्ठीमुस्तकपौरेषु निर्जरस्त्व[3]सुरे सुरे ।
निर्जरा तु तालपत्र्यां गुडुच्यां तत्त्वभिद्यपि ॥ ६०२ ॥
निर्झरो[4]ऽर्कास्त्रे तुषाग्नौ निकरः सारसङ्घयोः ।
न्यायदातव्यवित्ते च निर्वरं तु गतत्रपे ॥ ६०३ ॥
कठिने निर्भये सारे निकारस्तु पराभवे ।
धान्योत्क्षेपे, नीवरस्तु वास्तव्येऽपि वणिज्[5]यपि ॥ ६०४ ॥
प्रवरं सन्ततौ गोत्रे श्रेष्ठे च प्रवरः पुनः ।

---

१ झर्झरीवत्तु झल्लरी । २ तुवरी धान्यकशुनोः ।
3 अनर । ४ निर्तर । ५ विपणिस्त्वपि ।

वेसरे हयसन्नाहे कुक्कुरेऽतिभृशं खरे ॥ ६०५ ॥
प्रकरः कीर्णपुष्पादौ संहतौ, प्रकरं पुनः ।
जोङ्गके, प्रकरी त्वर्थप्रकृतौ चत्वराऽवनौ ॥ ६०६ ॥
प्रस्तरः प्रस्तारे ग्राव्णि मणौ च प्रदरः शरे ।
भङ्गे रोगे, प्रसरस्तु सङ्गरे प्रणये जवे ॥ ६०७ ॥
प्रकारः सदृशे भेदे पङ्कारो जलकुब्जके ।
सोपाने शैवले सेतौ पदारः पादधूलिषु ॥ ६०८ ॥
पादालिन्दे, पवित्रं तु मेध्ये ताम्रे कुशे जले ।
अर्घोपकरणे चापि पवित्रा तु नदीभिदि ॥ ६०९ ॥
प्रान्तरं कोटरेऽरण्ये दूरशून्यपथेऽपि च ।
पार्परो भस्मनि यमे जराटे नीपकेसरे ॥ ६१० ॥
क्षयरोगे भक्तसिक्थे पामरो मूर्खनीचयोः ।
पाटीरो मूलके वङ्गे तितऔ वान्तिकेऽम्बुदे ॥ ६११ ॥
केदारे वेणुसारे च पाण्डुरो वर्णतद्वतोः ।
पाण्डुरं तु वरुबके पिण्डारो भिक्षुके द्रुमे ॥ ६१२ ॥
महिषीपालके क्षेपे पिठरं मथि मुस्तके ।
उखायां च पिञ्जरस्तु पीते रक्तेऽश्वभिद्यपि ॥ ६१३ ॥
पिञ्जरं शातकुम्भे स्यात् पीवरः स्थूलकूर्मयोः ।
पुष्करं द्वीपतीर्थाहिखगरागौषधान्तरे ॥ ६१४ ॥
तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे ।
बठरो मूर्खशठयोः बन्धूरो रम्यनम्रयोः ॥ ६१५ ॥
बन्धुरस्तु तयोर्हंसे बन्धुजीवविडङ्गयोः ।
बन्धुरा पण्ययोषायां बर्बरी नीवृदन्तरे ॥ ६१६ ॥
बर्बरस्तु हञ्जिकायां पामरे केशचक्रले ।
पुष्पे च बर्बरा शाके बर्करः पशुनर्मणोः ॥ ६१७ ॥
बदरा स्यादेलापर्ण्यां विष्णुक्रान्तौषधावपि ।
बदरी कोलिकार्पास्योर्बादरं तु तयोः फले ॥ ६१८ ॥

१ ओघोप । २ रोगौ । ३ नष्ट । ४ बदरं ।

बदरस्तु कार्पासास्थिन भङ्गुरौ वक्रनश्वरौ।
भ्रामरं मधुहषदोर्भास्करो वह्निसूर्ययोः॥ ६१९॥
भार्यौरुरन्यस्त्रीपुत्रोत्पादके मृगशैलयोः।
भृङ्गारी तु चीरिकायां भृङ्गारः कनकालुका॥ ६२०॥
मत्सरः परसम्पत्त्यक्षमायां तद्वति क्रुधि।
कृपणे, मत्सरा तु स्यान्मक्षिका, मकरो निधौ॥ ६२१॥
नक्रे राशिविशेषे च मन्दरो मन्थपर्वते।
स्वर्गमन्दारयोर्मन्दे बहले, मधुरं विषम्॥ ६२२॥
मधुरस्तु प्रिये स्वादौ रसे च रसवत्यपि।
मधुरा मथुरापुर्यां यष्टीमोदामधूलिषु॥ ६२३॥
मधुकर्कटिकायां च मिश्रेयाशतपुष्पयोः।
मन्दिरो मकरावासे मन्दिरं नगरं गृहे॥ ६२४॥
मन्थरः सूचके कोशे वक्रे मन्दे पृथौ मथि।
मन्थरं तु कुसुम्भ्यां स्यान्मन्दारस्त्रिदशद्रुमे॥ ६२५॥
पारिभद्रेऽर्कपर्णे च मसूरो मसुरोऽपि च।
मसुरा च मसूरा च चत्वारः पण्ययोषिति॥ ६२६॥
तथा व्रीहिविशेषे च मर्मरो वसनान्तरे।
शुष्कपत्रध्वनौ चापि मर्मरी पीतदारुणि॥ ६२७॥
मयूरः केकिचूडाख्यौषध्यपामार्गकेकिषु।
महेन्द्रो वासवे शैले मञ्जरी तिलकद्रुमे॥ ६२८॥
वल्लर्यां स्थूलमुक्तायां माठरो व्यासविप्रयोः।
सूर्यानुगेऽथ मार्जारः स्यात्खट्वाङ्गबिडालयोः॥ ६२९॥
मिहिरोऽर्केऽम्बुदे बुद्धे मुद्गरः कोरकास्त्रयोः।
लोष्ठादिभेदने वापि मुहिरो मूर्खकामयोः॥ ६३०॥
मुदिरः कामुके मेघे मुकुरो मकुरो यथा।
कुलालदण्डे बकुले कोरकादर्शयोरपि॥ ६३१॥
मुर्मुरो मन्मथे सूर्यतुरगे तुषपावके।

१ कुकुट्टिका। २ खट्वांश।

रुधिरं घुसृणे रक्ते रुधिरो धरणीसुते ॥ ६३२ ॥
वल्लुरं कुञ्जमञ्जर्योः क्षेत्रेऽनम्भसि शाद्वले ।
वल्लूरं तु वनक्षेत्रे वाहनोषरयोरपि ॥ ६३३ ॥
शुष्कमांसे कोलमांसे वरत्रा वर्त्तिकक्षयोः ।
वशिरं किणिही सिन्धुलवणे कुम्भकेषु च ॥ ६३४ ॥
वागरो वारके शाणे निर्णये वाडव वृके ।
मुमुक्षौ पण्डिते चापि परित्यक्तभयेऽपि च ॥ ६३५ ॥
वासरो रागभेदेऽह्नि वादरं कृमिजे जले ।
काकचिञ्च्याश्च बीजे वाग्दक्षिणावर्तशङ्खयोः ॥ ६३६ ॥
वासुरा वासितारात्र्योर्भुवि, विष्टर आसने ।
पादपे कुशमुष्टौ च विस्तरौ स्तम्बविस्तृती ॥ ६३७ ॥
विदुरो नागरे धीरे धृतराष्ट्रानुजेऽपि च ।
विकारो विकृतौ रोगे विहारस्तु जिनालये ॥ ६३८ ॥
लीलायां भ्रमणे स्कन्धे विदारो युधि दारणे ।
विदारी रोगभेदे स्याच्छालपर्णीक्षुगन्धयोः ॥ ६३९ ॥
विधुरं स्यात्प्रविश्लेषे विकले, विधुरा पुनः ।
रसलायां, विसरस्तु समूहे प्रसरेऽपि च ॥ ६४० ॥
शबरो म्लेच्छभेदेऽप्सु हरेऽथो शम्बरं जले ।
चित्रे बौद्धव्रते भेदे शम्बरो दानवान्तरे ॥ ६४१ ॥
मत्स्यैणागिरिभेदेषु शबरी पुनरौषधौ ।
शर्करा खण्डविकृतौ कर्परांशे रुगन्तरे ॥ ६४२ ॥
उपलायां शर्करायुग्देशे च शकलेऽपि च ।
शरीरं शोणमध्यस्थपुलिने दर्दरीतटे ॥ ६४३ ॥
शर्वरी निशि नार्यां च शंकरी सरिदन्तरे ।
छन्दोजातौ मेखलायां शारीरं देहजे वृषे ॥ ६४४ ॥
शार्वरं घातुके ध्वान्ते शाबरो रोध्रपापयोः ।
अपराधे, शाबरी तु शूकशिम्ब्यथ शाक्करम् ॥ ६४५ ॥

१ नगदे नगरे । २ शर्करी ।

छन्दोभिच्छाकरस्तूक्षा शाक्कारं पक्षिपञ्जरे।
सोपानहस्तिनखयोः शिखरं पुलकाग्रयोः॥ ६४६॥
पक्वदाडिमबीजाभमाणिक्यशकलेऽपि च।
गिरिवृक्षाग्रकक्षासु[1] शिशिरः शीतले हिमे॥ ६४७॥
ऋतुभेदे, शिलीन्ध्रस्तु तरुमीनप्रभेदयोः।
शिलीन्ध्रं कदलीपुष्पे कवकत्रिपुटाख्ययोः॥ ६४८॥
शिलीन्ध्री विहगी गण्डूपदी मृदथ शीकरः।
वातास्त[2]जलेऽम्बुकणे सुषिरं वाद्यगर्तयोः॥ ६४९॥
सुषिरोऽग्नौ सरन्ध्रे च शृङ्गारो गजमण्डने।
सुरते रसभेदे च शृङ्गारं नागसम्भवे॥ ६५०॥
चूर्णे लवङ्गपुष्पे च संस्तरः स्रस्तरे मखे।
सङ्गरोऽङ्गीकृतौ युद्धे क्रियाकारे विषापदोः॥ ७५१॥
सङ्गरं तु फले शम्याः सम्भारः सम्भृतौ गणे।
संस्कारः प्रतियत्नेऽनुभवे[3] मानसकर्मणि॥ ६५२॥
गुणभेदेऽथ सङ्कारोऽवकरेऽग्निचटत्कृतौ।
सङ्कारी भुक्तकन्यायां सामुद्रं लवणान्तरे[4]॥ ६५३॥
लक्षणे च शरीरस्य सावित्रस्तु महेश्वरे।
सावित्री देवताभेदे सिन्दूरं नागसम्भवे॥ ६५४॥
सिन्दूरस्तु वृक्षभेदे सिन्दूरी रक्तचेलिका।
रोचनी धातकी सुन्दर्यङ्गनायां द्रुमान्तरे॥ ६५५॥
सुनारस्तु शुनीस्तन्ये सर्पाण्डे[5] चटकेऽपि च।
सैरन्ध्री परवेश्मस्थशिल्पकृत्स्ववशास्त्रियाम्॥ ६५६॥
वर्णसङ्करसम्भूतस्त्रीमहल्लिकयोरपि।
सौवीरं काञ्जिकस्रोताञ्जनयोर्बदरीफले॥ ६५७॥

इति त्रिस्वररान्ताः।

---

१ वृक्षाग्रे पर्वताग्रे च। २ वात्यास्तेम्बुकणे शारे।
३ साकल्येनुभवेऽपि च। ४ देहलक्षणे-समुद्रलवे चापि।
५ सपिण्डवटके।

स्यादर्गलं तु दण्डोर्मिपारिघेष्वनलोऽनिले ।
वसुदेवे वसौ वन्हावरालः समदद्विपे ॥ ६५८ ॥
वक्रे सर्जरसे चाप्यऽवेलस्तु स्यादुपद्रवे ।
अवेला तु पूगचूर्णेऽचलस्तु गिरिकीलयोः ॥ ६५९ ॥
अचला भुव्यञ्जलिस्तु कुडवे करसम्पुटे ।
अङ्गुलिः करशाखायां कर्णिकायां गजस्य च ॥ ६६० ॥
अमला कमलायां स्यादमलं विशदेऽभ्रके ।
आभीलं भीषणे कृच्छ्रेऽपील्वलो मत्स्यदैत्ययोः ॥ ६६१ ॥
इल्वलास्ताकारभेदेऽप्युपलो ग्रावरत्नयोः ।
उपला तु शर्करायामुत्पलं कुष्टभूरुहे ॥ ६६२ ॥
इन्दीवरे मांसशून्येऽप्युज्वलस्तु विकासिनि ।
शृङ्गारे विशदे दीप्तेऽप्युत्तालस्त्वरिते कपौ ॥ ६६३ ॥
श्रेष्ठोत्कटकरालेषूत्फुल्लं स्त्रीकरणान्तरे ।
विकस्वरोत्तालयोश्च कमलं क्लोम्नि भेषजे ॥ ६६४ ॥
पङ्कजे सलिले ताम्रे कमलस्तु मृगान्तरे ।
कमला श्रीवरनार्योः कपिलो वह्निपिङ्गयोः ॥ ६६५ ॥
कुक्कुरे मुनिभेदे च कपिला शिंशपातरौ ।
पुण्डरीककरिण्यां च रेणुकागोविशेषयोः ॥ ६६६ ॥
कपालं कुष्ठरुग्भेदे घटादिशकले गणे ।
शिरोस्थनि, कन्दलं तु नवाङ्कुरे कलध्वनौ ॥ ६६७ ॥
उपरागे मृगभेदे कपाले कदलीद्रुमे ।
करालो रौद्रतुङ्गोरुघृणतैलेषु दन्तुरे ॥ ६६८ ॥
करालं तु कुठेरे स्यात् कम्बलः कृमिसास्नयोः ।
नागप्रभेदे प्रावारवैकक्ष्ये, कम्बलं जले ॥ ६६९ ॥
कल्लोलोऽरौ हर्षवीच्योः कदली हरिणान्तरे ।
रम्भायां वैजयन्त्यां च कामलः कामिरोगयोः ॥ ६७० ॥
मरुदेशे वसन्ते च काकोलो मौकुलौ विषे ।

१ कलोले । २ अपन्हवे । ३ कन्दली । ४ मौकुलि ।

कुलाले, काहलं तु स्याद् भृशे सन्त्यक्तवाचि[1] च ॥६७१॥
शुष्के च वाद्यभेदे च काहली तरुणस्त्रियाम् ।
किट्टालस्तु लोहगूथे ताम्रस्य कलशेऽपि च ॥ ६७२ ॥
कीलालं रुधिरे नीरे कुशलं क्षेमपुण्ययोः ।
पर्याप्तौ, कुशलोऽभिज्ञे कुवलं बदरीफले ॥ ६८३ ॥
मुक्ताफलोत्पलयोश्च कुम्भिलो मीनमूषयोः[2] ।
श्लोकच्छायाहरे श्याले कुद्दालो भूमिदारुणे ॥ ६७४ ॥
युगपत्रेऽथ कुटिलं भङ्गुरे, कुटिला नदी ।
कुण्डलं वलये पाशे ताटङ्के कुण्डली पुनः ॥ ३७५ ॥
काञ्चनादौ गूढचर्यां च कुन्तलो यवकेशयोः[3] ।
कुन्तलाः स्युर्जनपदे कुकूलं तु तुषानले ॥ ६७६ ॥
शङ्कुसंयुक्तगर्ते च कुलालो घूकपक्षिणि ।
कुक्कुभे कुम्भकारे च कुचेलः स्यात्कुवाससि ॥ ६७७ ॥
कुचेला स्याद्विद्धकर्ण्यां केवलं त्वेककृत्स्नयोः ।
निर्णीते कुहने ज्ञाने केवली ग्रन्थभिद्यपि ॥ ६७८ ॥
कोमलं मृदुले तोये कोहलो मुनिमद्ययोः ।
ग्रन्थिलो ग्रन्थिसहिते विकङ्कतकरीरयोः ॥ ७७९ ॥
गरलं पन्नगविषे तृणपूलकमानयोः ।
गन्धोली वरटाशुण्ठ्योर्भद्रायामथ गोकिलः ॥ ६८० ॥
मुसले लाङ्गले चापि गोपालो नृपगोपयोः ।
स्याद्गौरिलस्तु सिद्धार्थे लोहचूर्णेऽथ चेन्द्रिलः[4] ॥ ६८१ ॥
नापिते वास्तुके रुद्रे चञ्चलोऽनिलकामिनोः ।
चञ्चला तु तडिल्लक्ष्म्योश्चपलश्चोरके चले ॥ ६८२ ॥
क्षणिके चिकुरे शीघ्रे पारदे प्रस्तरान्तरे ।
मीनेऽपि चपला तु स्यात्पिप्पल्यां विद्युति श्रियाम् ॥६८३॥
पुंश्चल्यामथ चात्वालो यज्ञकुण्डकगर्भयोः ।
चूडालश्चूडया युक्ते चूडालापि च वक्रला ॥ ६८४ ॥

---

१ अव्यक्तवाचि । २ झषचौरयोः । ३ हल । ४ चण्डिल ।

छगलश्छागे, छगली वृद्धदारकभेषजे ।
छगलं तु नीलवस्त्रे जगलो मदनद्रुमे ॥ ६८५ ॥
मेदके कितवे पिष्टमद्येऽथ जटिलो जटी ।
जटिला तु मांसिकायां जम्बूलः क्रकचच्छदे ॥ ६८६ ॥
जम्बूद्रुमेऽथ जम्बालं कर्दमे शैवलेऽपि च ।
जङ्गलो निर्जले देशे पिशितेऽप्यथ जम्भलः ॥ ६८७ ॥
जम्बीरे देवताभेदे जाङ्गलः स्यात्कपिञ्जले ।
जाङ्गली तु शूकशिम्ब्यां जाङ्गुलं जालिनीफले ॥ ६८८ ॥
जाङ्गुली विषविद्यायां तरलो भास्वरे चले ।
हारमध्यमणौ पिङ्गे तरले मद्यमुष्णिका ॥ ६८९ ॥
तमालो वरुणे पुण्ड्रेऽसौ तापिच्छेऽथ तण्डुला ।
विडङ्गे धान्यसारे च ताम्बूलं क्रमुके फले ॥ ६९० ॥
ताम्बूली नागवल्यां स्यात्तुमुलं रणसङ्कुले ।
तुमुलो विभीतकद्रौ तैतिलं करणान्तरे ॥ ६९१ ॥
तैतिलो गण्डकपशौ दुकूलं सूक्ष्मवाससि ।
क्षौमवस्त्रेऽथ धवलो महोक्षे सुन्दरे सिते ॥ ६९२ ॥
धवली गौर्नकुलस्तु पाण्डवप्राणिभेदयोः ।
नकुली कुक्कुटीमांस्योर्नाभीलं तूत्तमास्त्रियाः ॥ ६९३ ॥
वंक्षणे नाभिगर्भाण्डे नाकुली चव्यरास्नयोः ।
कुक्कुटीकन्दे, निचुलस्त्विज्जलद्रौ निचोलके ॥ ६९४ ॥
निस्तलं चले वृत्ते स्यान्निर्मलं विमलेऽभ्रके ।
निर्माल्ये च निष्कलस्तु नष्टबीजे कलोज्झिते ॥ ६९५ ॥
नेपाली मनःशिला स्यात्सुवेरा नवमाल्यपि ।
पटोलस्तु समाख्यातः फलवस्त्रविशेषयोः ॥ ६९६ ॥
प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे ।
प्रतलः पातालभेदे तलाङ्गुलिकरेऽपि च ॥ ६९७ ॥

१ कनके । २ तण्डुलः । ३ क्रमुकीफले ।
४ वले । ५ सुवहा ।

पटलं तिलके नेत्ररोगे छदिषि सञ्चये ।
पिटके परिवारे च पञ्चाला नीवृदन्तरे ॥ ६९८ ॥
पाञ्चाली पुत्रिकागीत्योः पललं पङ्कमांसयोः ।
तिलचूर्णे, पललस्तु राक्षसे, पाचलोऽनले ॥ ६९९ ॥
अनिले राधनद्रव्ये पाकलो द्विरदज्वले ।
पाकलं कुष्ठभैषज्ये पातालं वडवानले ॥ ७०० ॥
रसातले, पाटलं तु कुसुमश्वेतरक्तयोः ।
पाटलः स्यादाशुव्रीहौ पाटला पाटलिद्रुमे ॥ ७०१ ॥
पांशुलो हरखट्वाङ्गे पुंश्चले, पांशुला भुवि ।
पाटली मृत्तिकापात्रे नारीवागुरयोरपि ॥ ७०२ ॥
पिप्पलं सलिले वस्त्रच्छेदभेदेऽथ पिप्पलः ।
निरंसुले वृक्षपक्षिभेदयोः, पिप्पली कणा ॥ ७०३ ॥
पिङ्गलः कपिले वन्हौ रुद्रेऽर्कपरिपार्श्वके ।
कपौ मुनौ निधिभेदे पिङ्गला कुमुदस्त्रियाम् ॥ ७०४ ॥
कारायिकायां वेश्यायां नाडीभेदेऽथ पित्तलम् ।
पित्तवत्यारकूटे च पित्तला तोयपिप्पली ॥ ७०५ ॥
पिचुलो निचुले तोयवायसे कार्मुकद्रुमे ।
पिञ्जलं स्यात्कुशपत्रे हरिद्राभेऽथ पिच्छिलः ॥ ७०६ ॥
विजिले, पिच्छिला पीतकिकायां सरिदन्तरे ।
शाल्मलौ शिंशपायां च पिण्डिलो गणनागदे ॥ ७०७ ॥
स्थूलजङ्घे, पुष्कलस्तु पूर्णे श्रेष्ठेऽथ पुद्गलः ।
काये रूपादिमद्द्रव्ये सुन्दराकार आत्मनि ॥ ७०८ ॥
पेशलः कुशले रम्ये फेनिलोऽरिष्टपादपे ।
फेनिलं मदनफले बदरे फेनवत्यपि ॥ ७०९ ॥
बहुलं भूरिवियतोर्बहुलः पावके शितौ ।
कृष्णपक्षे, बहुला तु सुरभ्यां नीलिकैलयोः ॥ ७१० ॥

१ पाकल । २ पातली । ३ निरंशुले ।
४ झावुकद्रुमे । ५ विज्जले । ६ गणनापटौ ।

बहुलास्तु कृत्तिकासु बिडालो वृषदंशके ।
पक्षिभेदेऽक्षिगोल च मण्डलो विम्बदेशयोः ॥ ७११ ॥
भुगङ्गभेदे परिधौ शुनि द्वादशराजके ।
सङ्घाते कुष्ठभेदे च मञ्जुलं तु जलाञ्चले ॥ ७१२ ॥
रम्ये कुञ्जे, मञ्जुलस्तु दात्यूहे, मङ्गलं पुनः ।
कल्याणे, मङ्गलो भौमे मङ्गला श्वेतदूर्विका ॥ ७१३ ॥
महिलाऽङ्गनायां[1] गुण्ड्रायां मातुलो मदनद्रुमे ।
धत्तूरेऽहिव्रीहिभिदोः पितुः श्यालेऽथ माचलः ॥ ७१४ ॥
बन्दिचौरे रुजि ग्राहे मुसलं स्यादयोग्रके ।
मुशली तालमूल्याखुपर्णिका गृहगोधिका ॥ ७१५ ॥
मेखलाऽद्रिनितम्बे स्याद्रसनाखड्गबन्धयोः ।
रसाल इक्षौ चूते च रसालं चोलसिह्लयोः ॥ ७१६ ॥
रसाला दूर्वाविदार्योर्जिह्वामार्जितयोरपि ।
रमिलो रमणे कामे लाङ्गूलं शिश्नपुच्छयोः ॥ ७१७ ॥
लाङ्गलं तालहलयोः पुष्पभिद्गृहदारुणोः ।
लाङ्गली जलपिप्पल्यां लोहलोऽस्फुटवादिनि ॥ ७१८ ॥
शृङ्खलाधार्ये, वञ्जुलस्त्वशोके तिनिशद्रुमे ।
वानीरे चाथ वण्टालः शूरयुद्धखनित्रयोः ॥ ७१९ ॥
वातूलो वातले वातसमूहे मारुतासहे ।
वामिलो दाम्भिके वामे विपुलः पृथ्वगाधयोः ॥ ७२० ॥
विपुलाऽऽर्याभिदि क्षोण्यां विमलोऽर्हति निर्मले ।
वृषलस्तुरगे शूद्रे शकलं रागवस्तुनि ॥ ७२१ ॥
वल्कले त्वचि खण्डे च शवलं मत्सरे तटे ।
पाथेये च शयालुस्तु निद्रालौ वाहसे शुनि ॥ ७२२ ॥
श्यामलः पिप्पले श्यामे शार्दूलो राक्षसान्तरे ।
व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थितः ॥ ७२३ ॥
शाल्मलिः पादपे द्वीपे शीतलः शीतलेऽर्हति ।

---

१ नार्यां ।

श्रीखण्डे पुष्पकासीसासनपर्णोः शिलोद्भवे ॥ ७२४ ॥
शृगालो दानवे फेरौ शृगाली स्यादुपप्लुते ।
शृङ्खलं पुंस्कटीकाञ्च्यां लोहरज्जौ च बन्धने ॥ ७२५ ॥
शौष्कलः शुष्कमांसस्य पणिके पिशिताशिनि ।
षण्डाली सरसीतैलमानयोः कामुकस्त्रियाम् ॥ ७२६ ॥
सङ्कुलोऽस्पष्टवचने व्याप्ते च सरलस्त्वृजौ ।
उदारे पूतिकाष्ठे च सप्तला नवमालिका ॥ ७२७ ॥
सातला पाटला गुञ्जा सन्धिलौकःसुरुङ्गयोः ।
नद्यां, सिध्मलः किलासी सिध्मला मत्स्यचूर्णके ॥७२८॥
सुतलोऽट्टालिकाबन्धे पातालभुवनान्तरे ।
सुवेलप्रणते शान्ते गिरिभेदेऽथ हेमलः ॥ ७२९ ॥
कलादे सरटे ग्रावभिदि-

इति त्रिस्वरलान्ताः ।

अभावः पुनर्मृतौ ।
असत्तायामथाऽक्षीबं वशिरे मदवर्जिते ॥ ७३० ॥
आहवः समरे यज्ञेऽप्याश्रवो वचनस्थिते ।
प्रतिज्ञायां च क्लेशे च स्यादार्तवमृतूद्भवे ॥ ७३१ ॥
नारीरजसि पुष्पे चाद्भवः केशवमातुल ।
उत्सवे क्रतुवह्नौ चोत्सवोऽमर्षे महेऽपि च ॥ ७३२ ॥
इच्छाप्रसर उत्सेके कारवी कृष्णजीरके ।
दीप्ये मधुरात्वक्पत्र्योः कितवः कनकाह्वये ॥ ७३३ ॥
मत्ते च वञ्चके चापि केशवः केशसंयुते ।
पुन्नागे वासुदेवे च कैतवं द्यूतदम्भयोः ॥ ७३४ ॥
कैरवः कितवे शत्रौ कैरवं सितपङ्कजे ।
कैरवी तु चन्द्रिकायां गन्धर्वस्तु नभश्चरे ॥ ७३५ ॥
पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे ।
अन्तराभवदेहे च गालवो मुनिलोध्रयोः ॥ ७३६ ॥
गाण्डीवगाण्डिवौ चापमात्रे पार्थधनुष्यपि ।

ताण्डवं तृणभिन्नाट्यभेदयोस्त्रिदिवं तु खं ॥ ७३७ ॥
स्वर्गे च त्रिदिवा नद्यां द्विजिह्वः खलसर्पयोः ।
निह्नवः स्यादविश्वासे प्रलापे निकृतावपि ॥ ७३८ ॥
निष्पावः पवने सूर्पपवने निर्विकल्पके ।
वल्ले कडङ्करे शिम्ब्यां प्रभवो जन्मकारणे ॥ ७३९ ॥
आद्योपलम्भनस्थानेऽपां मूले मुनिभिद्यपि ।
प्रसवः पुष्पफलयोरपत्ये गर्भमोचने ॥ ७४० ॥
उत्पादे च प्रसेवस्तु वीणाङ्गस्यूतयोर्दृतौ ।
प्रभावस्तेजसि शक्तौ पल्लवः किसले वंटे ॥ ७४१ ॥
विटपे विस्तरेऽलक्तरागे शृङ्गारषिङ्गयोः ।
पञ्चत्वं भावे पञ्चानां प्राणानामसयेऽपि च ॥ ७४२ ॥
पार्थिवो नृपतौ भूमिविकारे, पार्थिवी तु का ।
पुङ्गवो गवि भेषज्ये प्रधाने चोत्तरस्थितः ॥ ७४३ ॥
फेरवो राक्षसे फेरौ बान्धवो बन्धुमित्रयोः ।
भार्गवः परशुरामे सुधन्वनि मतङ्गजे ॥ ७४४ ॥
दैत्याचार्ये, भार्गवी तु कृष्णदूर्वोमयोः श्रियाम् ।
भैरवो भीषणे रुद्रे रागभेदेऽथ माधवः ॥ ७४५ ॥
विष्णौ वसन्ते वैशाखे माधवी मधुशर्करा ।
वासन्ती कुट्टिनी हाला राघवोऽब्धेर्झषान्तरे ॥ ७४६ ॥
रघुजेऽप्यथ राजीवो मीनसारङ्गभेदयोः ।
राजीवमब्जे रौरवो भीषणे नरकान्तरे ॥ ७४७ ॥
बल्लवः स्यात्सूपकारे गोदोग्धरि वृकोदरे ।
वडवाऽश्वायां स्त्रीभेदे कुम्भदास्यां द्विजस्त्रियाम् ॥ ७४८ ॥
वाडवं करणे स्त्रीणां वाडवौघे रसातले ।
वाडवो विप्र और्वे च विद्रवो धीः पलायनम् ॥ ७४९ ॥
विभावः स्यात्परिचये रत्यादीनां च कारणे ।
विभवा धननिर्वृत्योः शात्रवं शत्रुसम्भवे ॥ ७५० ॥

---

१ आद्योपलब्धयः । २ वल्ले ।

शत्रुत्वे, शात्रवः शत्रौ षाण्डवो रसभावयोः।
सम्भवो जनने हेतौ मेलके चारुजन्मनि ॥ ७५१ ॥
आधेयस्याधारानतिरिक्तत्वे समयेऽपि च।
सचिवो भृत्यकेऽमात्ये सुखवी कृष्णजीरके ॥ ७५२ ॥
कारवेल्ले च जीरे च सुग्रीवो वानराधिपे।
चारुग्रीवे, सैन्धवस्तु सिन्धुदेशोद्भवे हये ॥ ७५३ ॥
मणिमन्थेऽपि–

इति त्रिस्वरवान्ताः।

अथादर्शष्टीकायां प्रतिपुस्तके।
दर्पणे, चाप्यथोड्डीशश्चण्डीशे शास्त्रभिद्यपि ॥ ७५४ ॥
उपांशुर्जपभेदे स्यादुपांशुर्विजनेऽव्ययम्।
कर्कशो निर्दये क्रूरे काम्पिल्लककृपाणयोः ॥ ७५५ ॥
इक्षौ साहसिके काममर्दके परुषे दृढे।
कपिशौ सिह्लकश्यावौ कपिशा माधवी सुरा ॥ ७५६ ॥
कीनाशः क्षुद्रयमयोः कर्षकोपांशुघातिनोः।
कुलिशो मत्स्यभिद्वज्रो गिरीशो वाक्पतौ हरे ॥ ७५७ ॥
अद्रिराजेऽथ तुङ्गीशः शशाङ्के शशिशेखरे।
दुःस्पर्शस्तु खरस्पर्शे कण्टकार्यां यवासके ॥ ७५८ ॥
निस्त्रिंशो निर्घृणे खड्गे निर्देशः कथनाज्ञयोः।
निर्वेशः स्यादुपभोगे मूर्छने वेतनेऽपि च ॥ ७५९ ॥
निवेशः सैन्यविन्यासे न्यासे द्रङ्गविवाहयोः।
निदेशः स्यादुपकण्ठ शासने परिभाषणे ॥ ७६० ॥
नीकाशो निश्चये तुल्ये प्रकाशः स्फुटहास[1]योः।
उद्योतेऽतिप्रसिद्धे च प्रदेशो देशमात्रके ॥ ७६१ ॥
भित्तौ मानविशेषे च पल[2]ः किंशुकः शठी।
हरिद्रर्णे राक्षसे च पलाशं छदने स्मृतम् ॥ ७६२ ॥
पक्षीशो गरुडे त्रिषर्णौ पिङ्गाशं जात्यकाञ्चने।

१ जिने। २ किंशुकद्वय

पिङ्गाशौ मत्स्यपल्लीशौ पिङ्गाशी नीलिका मता ॥ ७६३ ॥
बालिशस्तु शिशौ मूर्खे भूकेशः शैवले नटे ।
भूकेशी वल्वजेषु स्यात् लोमशो लोमसंयुते ॥ ७६४ ॥
मुनिभेदे च मेषे च लोमशा शाकिनीभिदि ।
महामेदाकाकजङ्घाशृगालीजटिलासु च ॥ ७६५ ॥
काशीशेऽतिबलाशूकशिम्बीमर्कटिकासु च ।
विवशः स्यादवश्यात्मानिष्टदुष्टमतिस्तथा[1] ॥ ७६६ ॥
विकाशो रहसि व्यक्ते विपाशः पाशवर्जिते ।
विपाशा तु सरिद्भेदे सदेशाऽन्तिकदेशयोः ॥ ७६७ ॥
सदृशं तूचिते तुल्ये सङ्काचे सदृशोऽन्तिके ।
संवेशः शयने पीठे सुखाशस्तु प्रचेतसि ॥ ७६८ ॥
शुभासे राजतिनिशे हताशो निष्कृपे खले ।
नष्टवाञ्छे, हुताशस्तु पावके बहुभोजिनि ॥ ७६९ ॥

इति त्रिस्वरशान्ताः ।

अध्यक्षोऽधिकृतेऽन्वक्षेऽभीषुः प्रग्रहरोचिषोः ।
आरक्षो रक्षके हस्तिकुम्भाधश्चामिषं पले ॥ ७७० ॥
सुन्दराकाररूपादौ सम्भोगे लोभलञ्चयोः ।
आकर्षः पाशके धन्वाभ्यासाङ्गे द्यूत इन्द्रिये ॥ ७७१ ॥
आकृष्टे शारिफलकेऽप्युष्णीषं लक्षणान्तरे ।
शिरोवेष्टे किरीटे स्यादुत्प्रेक्षाऽनवधानके ॥ ७७२ ॥
काव्यालङ्करणे वापि कलुषं त्वाविलांऽहसोः ।
कल्माषो राक्षसे कृष्णे शबलेऽप्यथ किल्विषम् ॥ ७७३ ॥
पापे रोगेऽपराधे च कुल्माषं स्यात्तु काञ्जिके ।
कुल्माषोऽर्द्धस्विन्नधान्ये यावके चणकेऽपि च ॥ ७७४ ॥
गवाक्षी त्विन्द्रवारुण्यां गवाक्षो जालके कपौ ।
गण्डूषो मुखपूर्त्तौ स्याद् गजहस्ताङ्गुलावपि ॥ ७७५ ॥
प्रसृत्या प्रमितेऽपि स्याद् गोरक्षो धेनुगोप्तरि ।

---

१ मतिश्च यः ।

नारङ्गे च, जिगीषा तु विजयेच्छाप्रकर्षयोः॥ ७७६ ॥
व्यवसाये, तरीषस्तु शोभनाकारभेलयोः।
समुद्रे व्यवसाये च तारिषोऽब्धिसुवर्णयोः॥ ७७७ ॥
स्वर्गे च नहुषो राजविशेषे नागभिद्यपि।
निकषः शाणपाषाणे निकषा यातुमातरि॥ ७७८ ॥
निमेषनिमिषौ नेत्रमीलने कालभिद्यपि।
प्रत्यूषः स्याद्वसौ प्रातः प्रदोषः कालदोषयोः॥ ७७९ ॥
परुषं कर्बुरे रूक्षे स्यान्निष्ठुरवचस्यपि।
पीयूषममृते नव्यसूतधेनुपयस्यपि॥ ७८० ॥
पुरुषस्त्वात्मनि नरे पुन्नागे चाथ पौरुषम्।
ऊर्ध्वविस्तृतदोःपाणिपुरुषोन्मानतेजसोः॥ ७८१ ॥
पुंसः कर्मणि भावे च महिषी नृपयोषिति।
सैरभ्यामौषधीभेदे मारिषस्त्वार्यशाकयोः॥ ७८२ ॥
मारिषा दक्षजननी मृगाक्षी मृगलोचना।
त्रियामेन्द्रवारुणी च रक्ताक्षी रक्तलोचने॥ ७८३ ॥
चकोरे महिषे क्रूरे पारावतेऽथ रोहिषः।
मृगकत्तृणमत्स्येषु विश्लेषस्तु वियोजने॥ ७८४ ॥
विधुरे च विशेषस्तु व्यक्ताववयवेऽपि च।
आधिक्ये चाथ शुश्रूषोपासनाश्रवणेच्छयोः॥ ७८५ ॥
शैलूषः स्यान्नटे बिल्वे संहर्षः पवने मुदि।
स्पर्द्धायां च समीक्षा तु ग्रन्थभेदे समीक्षणे॥ ७८६ ॥

इति त्रिस्वरषान्ताः।

अलसो द्रुमभेदे स्यात्पादरोगे क्रियाजडे।
अलसा तु हंसपद्यां नगौकोवदगौकसः॥ ७८७ ॥
विहङ्गसिंहसरभा आश्वासः स्यात्तु निर्वृतौ।
आख्यायिका परिच्छेदेऽपीष्वासो धन्वधन्विनोः॥ ७८८ ॥
उद्वासः प्राणने श्वासे गद्यबन्धान्तरेऽपि च।

१ कठिने।

उत्तंसः शेखरे कर्णपूरे चाप्यवतंसवत् ॥ ७८९ ॥
उदर्चिरुत्प्रभे वह्नौ कनीयाननुजेऽल्पके ।
अतियूनि, कीकसस्तु कृमौ, कीकसमस्थिनि ॥ ७९० ॥
तामसः सर्पखलयोस्तामसी स्यान्निशोमयोः ।
त्रिस्रोता जान्हवीसिन्धुभिदोरथ दिवौकसौ ॥ ७९१ ॥
चातकस्त्रिदशश्चापि दीर्घायुर्जीवके द्विके ।
मार्कण्डे शाल्मलितरौ नभसस्तु नदीपतौ ॥ ७९२ ॥
गगने ऋतुभेदे च पनसः कपिरुग्भिदोः ।
कण्टके कण्टकिफले प्रचेता वरुणे मुनौ ॥ ७९३ ॥
हृष्टे, पायसः श्रीवासे पायसं परमान्नके ।
बीभत्से विकृते क्रूरे रसे पार्थे घृणात्मनि ॥ ७९४ ॥
पुक्कसी कालिकानील्योः पुक्कसः श्वपचेऽधमे ।
मानसं स्वान्तसरसोः रभसो वेगहर्षयोः ॥ ७९५ ॥
राक्षसी कोणपी दंष्ट्रा रोद इव तु रोदसी ।
दिवि भुव्युभयोश्चापि लालसो लोलयाच्ञयोः ॥ ७९६ ॥
तृष्णातिरेक औत्सुक्ये वरीयान् श्रेष्ठयोगयोः ।
अतियूनि च विस्तीर्णे वायसस्त्वगुरौ द्विके ॥ ७९७ ॥
श्रीवासे, वायसी काकोदुम्बरी काकमाच्यपि ।
वाहसः स्यादजगरेऽम्बुनिर्याणनिषण्णयोः ॥ ७९८ ॥
विलासो हावे लीलायां विहायो व्योमपक्षिणोः ।
श्रीवासो वृकधूपे स्यात्कमले मधुसूदने ॥ ७९९ ॥
श्रेयसी गजपिप्पल्यामभयारास्नयोरपि ।
समासः स्यादेकपद्ये संक्षेपे च समर्थने ॥ ८०० ॥
सप्तार्चिः क्रूरनेत्रेऽग्नौ साधीयानतिशोभने ।
अतिबाढे, साहसं तु दमे दुष्करकर्मणि ॥ ८०१ ॥
अविमृश्य कृतौ धार्ष्ट्ये सारसं सरसीरुहे ।
सारसः पुष्कराख्येन्द्वोः सुमनाः प्राज्ञदेवयोः ॥ ८०२ ॥
जात्यां पुष्पे सुमेधास्तु ज्योतिष्मत्यां विदुष्यपि ।

सुरसः स्यात् सुमधुरे सुरसा त्वौषधीभिदि ॥ ८०३ ॥

इति त्रिस्वरसान्ताः ।

अत्यूहस्तु मयूरे स्यादत्यूहा नीलिकौषधौ ।
आग्रहोऽनुग्रहासक्तिग्रहेष्वाक्रमणेऽपि च ॥ ८०४ ॥
आरोहो दैर्घ्य उच्छ्राये स्त्रीकट्यां मानभिद्यपि ।
आरोहणे गजारोहेऽप्युत्साहः सूत्र उद्यमे ॥ ८०५ ॥
कलहो मण्डले खड्गकोशे युद्धे[1]वराटयोः ।
कटाहः स्यात्कूर्मपृष्ठे कर्परे महिषीशिशौ ॥ ८०६ ॥
तैलादिपाकपात्रे च दात्यूहः कालकण्टके ।
चातकेऽपि नवाहस्तु प्रतिप[3]त्तिथिघस्रयोः ॥ ८०७ ॥
निर्यूहो द्वारि निर्यासे शिखरे नागदन्तके ।
निरूहो निश्चिते तर्के बस्तिभेदेऽथ निग्रहः ॥ ८०८ ॥
बन्धके भर्त्सने सीम्नि प्रग्रहः किरणे भुजे ।
तुलासूत्रेऽश्वादिरश्मौ सुवर्णे हरिपादपे ॥ ८०९ ॥
बन्धे बन्द्यां, प्रवाहस्तु व्यवहाराम्बुवेगयोः ।
प्रवहो वायुभेदे स्याद्वायुपात्रे बहिर्गतौ ॥ ८१० ॥
प्रग्राहः स्यात्तुलासूत्रे वृषादीनां च बन्धने ।
पटहो वाद्य आरम्भे वाराहो नाणके किटौ ॥ ८११ ॥
मेघे मुस्तौ गिरौ विष्णौ वाराही गृष्टिभेषजे ।
मातर्यपि, विदेहस्तु निर्देह मैथिलेऽपि च ॥ ८१२ ॥
विग्रहो युधि विस्तारे प्रविभागशरीरयोः ।
वैदेही पिप्पलीसीतारोचनासु वणिक्स्त्रियाम् ॥ ८१३ ॥
सङ्गहो बृहदु[5]द्रङ्गे मुष्टिसंक्षेपयोरपि ।
सुवहस्तु सम्यग्वहे सुवहा सल्लकीद्रुमे ॥ ८१४ ॥
रास्नाशेफालिकागोधापद्यैलापर्णिकासु च ।

इत्याचार्यहेमचन्द्रविरचितेऽनेकार्थसङ्ग्रहे
त्रिस्वरकाण्डः समाप्तः ।

---

१ स्वादौ पर्णासे । २ समरराढयोः ।
३ आद्यतिथिनववासरे । ४ हलि । ५ बृहदुद्वारे, बृहदुत्तुङ्गे ।

अङ्गारकस्तूल्मुकांशे महीपुत्रे कुरुण्टके ।
अङ्गारिका त्विक्षुकाण्डे किंशुकस्य च कोरके ॥ १ ॥
अलिपिकः[1] पिके भृङ्गेऽलिमकः पद्मकेसरे ।
मधूके कोकिले भेकेऽश्मन्तकं मल्लिकाच्छदे ॥ २ ॥
चुल्यां चाऽऽक्षेपको व्याधे निन्दके वातरुज्यपि ।
आकल्पकस्तमोमोहग्रन्थावुत्कलिकामुदोः ॥ ३ ॥
आखनिकस्त्वाखुरिव किरावुन्दुरुचौरयोः ।
उत्कलिका तु हेलायां तरङ्गोत्कण्ठयोरपि ॥ ४ ॥
एडमूकोऽनेडमूक इवावाक्श्रुतिके शठे ।
कठिल्लकस्तु वर्षाभ्वां पर्णासे कारवेल्लके ॥ ५ ॥
कर्कोटकोऽहौ बिल्वे च कनीनिकाऽक्षितारके ।
स्यात्कनिष्ठाङ्गुलिरपि काकरूको दिगम्बरे ॥ ६ ॥
उलूके स्त्रीजिते दम्भे भीरुके निर्द्धनेऽपि च ।
कुरुबकः शोणाम्लानेऽरुणा पीता च झिण्टिका ॥ ७ ॥
कृकवाकुस्ताम्रचूडे मयूरकृकलासयोः ।
कोशातकः कचे, कोशातकी ज्योत्स्नी पटोलिका ॥ ८ ॥
घोषकेऽथ कौलेयकः सारमेयकुलीनयोः ।
कौक्कुटिको दाम्भिके स्याददूरेरितलोचने ॥ ९ ॥
गुणनिका तु शून्याङ्के नर्तने पाठनिश्चये ।
गोमेदकं पीतरत्ने काकोल पत्रकेऽपि च ॥ १० ॥
गोकण्टको गोक्षुरके गोखुरे स्थपुटीकृते ।
गोकुलिकः केकरे स्यात्पङ्कस्थगव्युपेक्षके ॥ ११ ॥
घर्घरिका भ्रष्टधान्ये किङ्किण्यां सरिदन्तरे ।
वादित्रस्य च दण्डेऽपि चाण्डालिकौषधीभिदि ॥ १२ ॥
किन्नरायामुमायां च जर्जरीकं जरातुरे ।
बहुच्छिद्रेऽप्यथ जैवातृकः स्याद्रजनीकरे ॥ १३ ॥

---

१ अलिपकः ।

कृशायुष्मद्भेषजेषु ततरीकं वहित्रके।
पारगे, त्रिवर्णकस्तु गोक्षुरेऽथ त्रिवर्णकम् ॥ १४ ॥
त्र्यूषणं त्रिफला, तिक्तशाकस्तु पथि सुन्दरे।
वरुणे खदिरे, दन्दशूकस्तु फणिरक्षसोः ॥ १५ ॥
दलाढकोऽरण्यतिले गैरिके नागकेसरे।
कुन्दे महत्तरे फेने करिकर्णशिरीषयोः ॥ १६ ॥
वात्यायां खातके पृश्न्यां दासेरकस्तु धीवरे।
दासीपुत्रे च करभे नियामको नियन्तरि ॥ १७ ॥
पोतवाहे कर्णधारे निश्वारकः समीरणे।
पुरीषस्य क्षये स्वैरे प्रचलाको भुजङ्गमे ॥ १८ ॥
शराघाते शिखण्डे च प्रकीर्णकं तुरङ्गमे।
चामरे विस्तरे ग्रन्थभेदे पिप्पलकं पुनः ॥ १९ ॥
चूचुके सीवनसूत्रे पिण्डीतकः फणिज्झके।
तगरे मदनेऽद्रौ च पुण्डरीकं सिताम्बुजे ॥ २० ॥
सितच्छत्रे भेषजे च पुण्डरीकोऽग्निदिग्गजे।
सहकारे गणधरे राजिलाहौ गजज्वरे ॥ २१ ॥
कोषकारान्तरे व्याघ्रे पुष्कलकस्तु कीलके।
क्षपणे गन्धहरिणे स्यात्पूर्णानकमानके ॥ २२ ॥
पात्रे च पूर्णपात्रे च फर्फरीकं तु मार्दवे।
फर्फरीकश्चपेटायां बलाहकोऽम्बुदे गिरौ ॥ २३ ॥
दैत्ये नागे, बर्बरीकः केशविन्यासकर्मणि।
शाकभेदे महाकाले वकेरुका बलाकिका ॥ २४ ॥
वातावर्जितशाखा[1] च भ्रमरको मधुव्रते।
गिरिके चूर्णकेशे च भयानकः सभीषणे[2] ॥ २५ ॥
व्याघ्रे राहौ रसे, भट्टारको राज्ञि मुनौ सुरे।
भार्याटिको मृगभेदे भार्यया च विनिर्जिते ॥ २६ ॥

---

१ वातवर्जित। २ भीषणे।

मरुबकः पुष्पभेदे मदनद्रौ फणिज्जके ।
मयूरकस्त्वपामार्गे मयूरकं तु तुत्थके ॥ २७ ॥
मण्डोदकं तु चित्तस्य राग आतर्पणेऽपि च ।
माणवकः कुपुंसि स्याद्बालहाराभेदोरपि ॥ २८ ॥
मृष्टेरुकः स्यान्मिष्टाशे दानशौण्डेऽतिथिद्विषि ।
रतर्द्धिकं तु दिवसे सुखस्नानेऽष्टमङ्गले ॥ २९ ॥
राघरङ्कुः सुनासीरे शीकरे जलदोपले ।
लालाटिकः स्यादाश्लेषभेदे कार्याक्षमेऽपि च ॥ ३० ॥
प्रभोर्भालदर्शिनि च लेखनिकस्तु तत्र यः ।
स्वहस्तपरहस्तेन लिखितेषु विलेखयेत् ॥ ३१ ॥
लेखहारे, वर्त्तरूकः काकनीडे जलावटे ।
वराटकः पद्मबीजकोशे रज्जौ कपर्दके ॥ ३२ ॥
वरण्डकस्तु मातङ्गवेद्यां यौवनकण्टके ।
संवेतुले कचे भित्तौ विनायके गणाधिपे ॥ ३३ ॥
बुद्धे तार्क्ष्ये गुरौ विघ्ने वितुन्नकं तु धान्यके ।
झाटामलौषधौ चापि विदूषकोऽन्यनिन्दके ॥ ३४ ॥
क्रीडानायकपात्रे च विशेषकस्तु पुण्ड्रके ।
विशेषाधायके वापि वृन्दारको मनोरमे ॥ ३५ ॥
सुरे श्रेष्ठे, बृहतिका स्यादुरुवस्त्रभेदयोः ।
वैतानिकः खड्गताले मङ्गलपाठकेऽपि च ॥ ३६ ॥
वैनाशिकः स्यात्क्षणिके परायत्तोर्णनाभयोः ।
वैदेहको वणिजके वैश्यापुत्रे च शूद्रतः ॥ ३७ ॥
शतानीको मुनौ वृद्धे शालावृको वलीमुखे ।
सारमेये शृङ्गाले च शिलाटकः शिलाट्टयोः ॥ ३८ ॥
शृङ्गाटकं पथां श्लेषे पानीयकण्टकेऽपि च ।
शृगालिका शिवायां स्यात्त्रासादपि पलायने ॥ ३९ ॥

---

१ मृष्टाशे । २ संवर्तके ।

सङ्घाटिका तु कुट्टिन्यां घ्राणे युग्मेऽम्बुकण्टके ।
सन्तानिका क्षीरसारे मर्कटस्य च जालके ॥ ४० ॥
सुप्रतीकः स्यादीशानदिग्गजे शोभनाङ्गके ।
सैकतिकं पुनर्मातृयात्रामङ्गलसूत्रयोः ॥ ४१ ॥
सैकतिकः क्षपणके संन्यस्ते भ्रान्तिजीविनि ।
सोमवल्कः कट्फले स्याद्बुलक्षखदिरद्रुमे ॥ ४२ ॥
सौगन्धिको गन्धवणिक् सौगन्धिकं तु कत्तृणे ।
गन्धोपले पद्मरागे कह्लारे-

इति चतुःस्वरकान्ताः ।

अग्निमुखो द्विजे ॥ ४३ ॥
भल्लाते चित्रके देवेऽप्यग्निशिखं तु कुङ्कुमे ।
अग्निशिखा लाङ्गलिक्यामिन्दुलेखेन्दुखण्डके ॥ ४४ ॥
गुडूचीसोमलतयोः पञ्चनखस्तु कच्छपे ।
गजे, बद्धशिखो बाले बद्धशिखोच्चटौषधौ ॥ ४५ ॥
महाशङ्खो निधिभेदे संख्याभेदे नरास्थिनि ।
व्याघ्रनखस्तु कन्दे स्याद्गन्धद्रव्यान्तरेऽपि च ॥ ४६ ॥
शिलीमुखो वृत्तभेदे वाकूचीचन्द्रलेखयोः ।
शिलीमुखोऽलौ बाणे च-

इति चतुःस्वरखान्ताः ।

अपवर्गः स्त्यागमोक्षयोः ॥ ४७ ॥
क्रियावसानसाफल्येऽप्यभिषङ्गः पराभवे ।
आक्रोशे शपथे चेहामृगः स्याद्रूपकान्तरे ॥ ४८ ॥
वृके जन्तौ, चोपरागो राहुग्रस्तार्कचन्द्रयोः ।
विगाने दुर्नये राहावुपसर्ग उपद्रवे ॥ ४९ ॥
भादौ रोगप्रभेदे च कटभङ्गो नृपात्यये ।
हस्तच्छेदे च सस्यानां छत्रभङ्गो नृपक्षये ॥ ५० ॥
स्वातन्त्र्ये विधवत्वे च दीर्घाध्वगः क्रमेलके ।

१ ०च्चटौषधौ । २ विमाने

लेखहारे, मल्लनागो वात्स्यायनसुरेभयोः ॥ ५१ ॥
समायोगस्तु संयोगे समवाये प्रयोजने ।
सम्प्रयोगो निधुवने सम्बन्धे कार्मणेऽपि च ॥ ५२ ॥

इति चतुःस्वरगान्ताः ।

जलसूचिः शिशुमारे त्रोटिमत्स्ये जलौकसि ।
कङ्कशृङ्गाटयोश्चापि मलिम्लुचस्तु तस्करे ॥ ५३ ॥
वाते-

इति चतुःस्वरचान्ताः ।

काश्मीरजं कुष्ठे कुङ्कुमे पुष्करेऽपि च ।
काश्मीरजाऽतिविषायां क्षीराब्धिजं तु मौक्तिके ॥ ५४ ॥
वशिरे, क्षीराब्धिजस्तु चन्द्रे, क्षीराब्धिजा श्रियाम् ।
ग्रहराजः शशिन्यर्के जघन्यजोऽनुजन्मनि ॥ ५५ ॥
शूद्रे च द्विजराजस्तु शेषे तार्क्ष्ये निशाकरे ।
धर्मराजस्तु सुगते श्राद्धदेवे युधिष्ठिरे ॥ ५६ ॥
भरद्वाजः पक्षिभेदे बृहस्पतिसुतेऽपि च ।
भारद्वाजो मुनौ, भारद्वाजी वनपिचुद्रुमे ॥ ५७ ॥
भृङ्गराजो मधुकरे मार्कवे विहगान्तरे ।
राजराजो नृपश्रेन्द्वोः कुबेरेऽथ सकृत्प्रजः ॥ ५८ ॥
द्विके सिंहे-

इति चतुःस्वरजान्ताः ।

अथोच्चिङ्गटः कोपने मीनाभिद्यपि ।
करहाटः पद्मकन्दे पुष्पद्रुमविशेषयोः ॥ ५९ ॥
कार्यपुटोऽनर्थकरे कृपणोन्मत्तयोरपि ।
कामकूटौ वेश्याविभ्रमेष्टावथ कुटन्नटः ॥ ६० ॥
शोणके कैवर्तीमुस्ते कुण्डकीटस्तु जारतः ।
विप्रापुत्रेऽर्थवे(?)दास्याश्चार्वाकोक्तिविशारदे ॥ ६१ ॥
खञ्जरीटस्तु फलकेऽसिधाराव्रतचारिणि ।

गन्धकुटी मंदिरायां बुद्धाद्यायतनेऽपि च ॥ ६२ ॥
गाढमुष्टिस्तु कृपणे कृपाणप्रभृतावपि ।
चक्रवाटस्तु पर्यन्ते क्रियारोहे शिखातरौ ॥ ६३ ॥
चतुःषष्टिश्चतुःषष्टिकलासु च हवेऽपि च ।
तुलाकोटिर्मानभेदेऽर्बुदे स्यान्नूपुरेऽपि च ॥ ६४ ॥
नारकीटः स्वदत्ताशाविहन्तर्यश्मकीटके ।
प्रतिकृष्टं तु गुह्ये स्याद्विरावृत्त्या च कर्षिते ॥ ६५ ॥
प्रतिसृष्टः पुनः प्रत्याख्याते च प्रेषितेऽपि च ।
परपुष्टः कलकण्ठे परपुष्टा पणाङ्गना ॥ ६६ ॥
वर्कराटस्तु तरुणादित्यरोचिःकटाक्षयोः ।
स्त्रीणां पयोधरोत्सेधकान्तदत्तनखेऽपि च ॥ ६७ ॥
शिपिविष्टस्तु खल्वाटे दुश्चर्मणि पिनाकिनि ।
श्रुतिकटः प्राश्वलोहे प्रायश्चित्तभुजङ्गयोः ॥ ६८ ॥
इति चतुःस्वरटान्ताः ।
कलकण्ठः पिके पारावते हंसे कलध्वनौ ।
कालकण्ठनीलकण्ठौ पीतसारे महेश्वरे ॥ ६९ ॥
दात्यूहे ग्रामचटके खञ्जरीटे शिखावले ।
कालपृष्ठं तु कोदण्डमात्रके कर्णधन्वनि ॥ ७०
कालपृष्ठो मृगभेदे कङ्के, दन्तशठः पुनः ।
जम्बीरे नागरङ्गे च कर्मकारकपित्थयोः ॥ ७१ ॥
पूतिकाष्ठं तु सरले देवदारुद्रुमेऽपि च ।
सूत्रकण्ठः खञ्जरीटे द्विजन्मनि कपोतके ॥ ७२ ॥
हारिकण्ठो हारयुक्तकण्ठे परभृतेऽपि च ।
इति चतुःस्वरठान्ताः ।
अपोगण्डोऽतिभीरौ स्याच्छिशुके विकलाङ्गके ॥ ७३ ॥
चक्रवाडं गणे, चक्रवाडोऽद्रौ चक्रवालवत् ।
जलरुण्डः पयोरेणौ जलावर्त्ते भुजङ्गमे ॥ ७४ ॥

---

१ भ्रूरा २ दूरावृते । ३ कर्मरङ्ग । ४ जलरण्डः ।

देवताडो घोषकेऽग्नौ राहौ, वातखुडा पुनः ।
वात्यायां पिच्छिले स्फोटे वामायां वातशोणिते ॥ ७५ ॥

इति चतुःस्वरडान्ताः ।

अध्यारूढः समारूढेऽप्यधिकेऽप्यभिधेयवत् ।

इति चतुःस्वरढान्ताः ।

अङ्गारिणी हसन्त्यां स्याद्भास्करत्यक्तदिश्यपि ॥ ७६ ॥
आथर्वणोऽथर्वविदि ब्राह्मणे च पुरोधसि ।
आरोहणं समारोहे सोपाने च प्ररोहणे ॥ ७७ ॥
आतर्पणं तु सौहित्ये विद्यादालिम्पनेऽपि च ।
उत्क्षेपणा तु व्यजने धान्यमर्दनवस्तुनि ॥ ७८ ॥
उदञ्चने चोद्धरणं स्यादुन्मूलन उन्नये ।
वान्तान्ने च कामगुणो विषयाभोगयो रतौ ॥ ७९ ॥
कार्षापणः कार्षिके स्यात् पणे षोडशकेऽपि च ।
चीर्णपर्णस्तु निम्बे स्यात् खर्जूरीभूरुहेऽपि च ॥ ८० ॥
चूडामणिः काकचिञ्चाफले मूर्द्धमणावपि ।
जुहुवाणोऽध्वर्युवन्ह्योस्तण्डुरीणस्तु बर्बरे ॥ ८१ ॥
तण्डुलाम्बुनि कीटे च तैलपर्णी तु सिह्लके ।
श्रीवासे चन्दने दाक्षायण्युमायां च भेषु च ॥ ८२ ॥
रोहिण्यां च देवमणिर्विष्णुवक्षोमणौ हरौ ।
अश्वस्य कण्ठावर्त्ते च नारायणस्तु केशवे ॥ ८३ ॥
नारायणी शतावर्युमा श्रीर्निःसरणं मृतौ ।
उपाये गेहादिमुखे निर्वाणे निर्गमेऽपि च ॥ ८४ ॥
निस्तरणं तु निस्तारे तरणोपाययोरपि ।
निरूपणं विचारे स्यादालोके च निदर्शने ॥ ८५ ॥
निगरणं भोजने स्यात् निगरणः पुनर्गले ।
प्रवारणं काम्यदाने निषेधेऽथ परीरणः ॥ ८६ ॥
दण्डे कूर्मे पट्टशाटे पर्परीणं तु पर्वणि ।

---

१ हो

पर्णवृन्तरसे पर्णशिरायां मूलकम्बले ॥ ८७ ॥
परायणं स्यादभीष्टे तत्पराश्रययोरपि।
परवाणिर्धर्माध्यक्षे वर्षे, पारायणं पुनः ॥ ८८ ॥
कार्त्स्न्ये पारगतौ सङ्गे पीलुपर्णौषधीभिदि।
मूर्वायां बिम्बिकायां च पुष्करिणी जलाश्रये ॥ ८९ ॥
हस्तिन्यां कमलिन्यां च मीनाम्रीणस्तु खञ्जने।
दर्दुराभ्रे, रक्तरेणुः पलाशकलिकोद्गमे ॥ ९० ॥
सिन्दूरे, रागचूर्णस्तु खादिरे मकरध्वजे।
रेरिहाणोऽम्बरे रुद्रे लम्बकर्णः पुनश्छगे ॥ ९१ ॥
अङ्कोटे, वारबाणस्तु कूर्पासे कवचेऽपि च।
विदारणं भेदने स्यात्सम्परायविडम्बने ॥ ९२ ॥
वैतरणी प्रेतनद्यां जनन्यामपि रक्षसाम्।
शरवाणिः शरमुखे पदातौ शरजीविनि ॥ ९३ ॥
शिखरिणी वृत्तभेदे रोमालीपेयभेदयोः।
स्त्रीरत्ने मल्लिकायां च समीरणः फणिज्जके ॥ ९४ ॥
पान्थे वायौ, संसरणं त्वसम्बाधचमूगतौ।
संसारे समरारम्भे नगरस्योपनिर्गमे ॥ ९५ ॥
हस्तिकर्णः स्यादेरण्डे पलाशगणभेदयोः।

इति चतुःस्वरणान्ताः।

अवदातं तु विमले मनोज्ञे सितपीतयोः ॥ ९६ ॥
अपावृतोऽपरायत्ते पिहिते,ऽवसितं गतौ।
बद्धे[3] ज्ञातेऽवसाने चाप्यऽवगीतं विगर्हिते ॥ ९७ ॥
मुहुर्दृष्टेऽपवादे चाऽत्याहितं तु महाभये।
जीवनिरपक्षकर्मण्यभिजातः कुलोद्भवे ॥ ९८ ॥
न्याय्ये प्राज्ञेऽभिनीतस्तु न्यायेऽमर्षिणि संस्कृते।
अभियुक्तः परिरुद्धे तत्परेऽन्तर्गतं पुनः ॥ ९९ ॥

---

१ विंचिका। २ पतौ। ३ ऋद्धे।

मध्यप्राप्तविस्मृतयोरङ्गारितं तु भास्मिते ।
पलाशकलिकोद्भेदे चातिमुक्तः सुनिष्कले ॥ १०० ॥
वासान्तकाया तिनिशेऽप्यवध्वस्ताऽवचूर्णिते ।
त्यक्तनिद्रितयोश्चाऽधिक्षिप्तौ निहितभर्त्सितौ ॥ १०१ ॥
अपचितिर्व्यये हानौ पूजायां निष्कृतावपि ।
अनुमतिः स्यादनुज्ञापूर्णमासीविशेषयोः ॥ १०२ ॥
अभिशस्तिः पुनर्लोकापवादे प्रार्थिते[1]ऽपि च ।
उदास्थितश्चरे द्वाःस्थेऽध्यक्षे चोपाहितः पुनः ॥ १०३ ॥
आरोपितेऽनलोत्पातेऽप्युपाकृत उपद्रुते ।
मंत्रेण प्रोक्षतपशावुल्लिखितं तनूकृते ॥ १०४ ॥
उत्कीर्णे, चोपरक्तस्तु स्वर्भानौ व्यसनातुरे ।
राहुग्रस्तार्कशशिनोरुपाचितः समाहिते ॥ १०५ ॥
ऋद्धे दिग्धेऽथोज्जृम्भितमुत्फुल्ले चेष्टितेऽपि च ।
उद्ग्राहितमुपन्यस्ते बद्धग्राहितयोरपि ॥ १०६ ॥
उपसत्तिः सङ्गमात्रे प्रतिपादनसेवयोः ।
ऋष्यप्रोक्ता शूकशिम्ब्यां शतावर्यां बलाभिदि ॥ १०७ ॥
ऐरावतोऽह्रौ नारङ्गे लकुचे त्रिदशद्विपे ।
ऐरावतं तु शक्रस्य ऋजुदीर्घशरासने ॥ १०८ ॥
ऐरावती सरिद्विद्युद्भिदोः शतह्रदा यथा ।
कलधौतं रूप्यहेम्नोः कलधौतः कलध्वनौ ॥ १०९ ॥
कुहरितं तु[2] रटिते पिकालापे रतस्वने ।
कुमुद्वती कैरविण्यां दयितायां कुशस्य च ॥ ११० ॥
कृष्णवृन्ता माषपर्ण्यां पाटलाख्यद्रुमेऽपि च ।
गन्धवती सुरापुर्योः पृथ्वीयोजनगन्धयोः ॥ १११ ॥
गृहपतिर्गृही सत्री चन्द्रकान्तं तु कैरवे ।
चन्द्रकान्तो रत्नभेदे चर्मण्वती नदीभिदि ॥ ११२ ॥

---

१ प्रार्थने । २ कुरटिते ।

कदल्यां, चित्रगुप्तस्तु कृतान्ते तस्य लेखके।
दिवाभीतः काकरिपौ कुम्भिले कुमुदाकरे॥ ११३॥
दिवाकीर्तिर्नापिते स्यादुलूकेऽन्त्यावसायिनि।
धूमकेतू वह्न्युत्पातौ नन्द्यावर्तौ गृहान्तरे॥ ११४॥
तगरेऽथ नदीकान्तो निर्गुण्डीनिचुलाब्धिषु।
नदीकान्ता लताजम्ब्वोः काकजङ्घौषधेऽपि च॥ ११५॥
नागदन्तो हस्तिदन्ते गृहान्निःसृतदारुणि।
नागदन्ती श्रीहस्तिन्यां कुम्भाख्यभेषजेऽपि च॥ ११६॥
निस्तुषितं वर्जिते स्याद्धृतत्वचि लघूकृते।
निराकृतिरस्वाध्याये निराकारनिषेधयोः॥ ११७॥
प्रतिहतस्तु विद्विष्टे प्रतिस्खलितरुद्धयोः।
प्रणिहितं तु सम्प्राप्तनिहितयोः समाहिते॥ ११८॥
प्रतिक्षिप्तं प्रतिहते निषिद्धे प्रेषितेऽपि च।
प्रधूमिता क्लेशितायां रविगन्तव्यदिश्यपि॥ ११९॥
प्रव्राजिता तु मुण्डीर्यां तापस्यां मासिकौषधौ।
प्रजापतिर्ब्रह्मराज्ञोर्जामातरि दिवाकरे॥ १२०॥
वह्नौ त्वष्टरि दक्षादौ प्रतिकृतिस्तु पूजने।
प्रतिमायां प्रतीकारे प्रतिपत्तिस्तु गौरवे॥ १२१॥
प्राप्तौ प्रवृत्तौ प्रागल्भ्ये बोधे, परिगतं गते।
प्राप्तवेष्टितयोर्ज्ञाते पल्लवितं सपल्लवे॥ १२२॥
लाक्षारक्ते तते पञ्चगुप्तश्चार्वाकदर्शने।
कमठे, परिवर्तस्तु कूर्मराजे पलायने॥ १२३॥
युगान्ते विनिमये च परिघातस्तु घातने।
अस्त्रान्तरे, पशुपतिः पिनाकिनि हुताशने॥ १२४॥
पाशुपतः शिवमल्ल्यां पशुपत्यभिदैवते।
पारिजातस्तु मन्दारे पारिभद्रे सुरद्रुमे॥ १२५॥

लाभ।

पारावतः कलरवे गिरौ मर्कटतिन्दुके ।
पारावती तु लवलीफलगोपालगीतयोः ॥ १२६ ॥
पुष्पदन्तस्तु दिङ्नागे जिनभेदे गणान्तरे ।
पुष्पवन्तौ च चन्द्राकार्वेकोक्त्याऽथ पुरस्कृतम् ॥ १२७ ॥
पूजिते स्वीकृते सिक्तेऽभिशस्तेऽप्रकृतेऽपि च ।
भोगवती च सर्पाणां नगरे सरिदन्तरे ॥ १२८ ॥
रङ्गमाता जतुचेट्योर्लक्ष्मीपतिर्जनार्दने ।
पूगे लवङ्गवृक्षे च व्यतीपात उपद्रवे ॥ १२९ ॥
योगभेदेऽपयाने च वनस्पतिर्द्रुमात्रके ।
विनापुष्पफलिद्रौ च विनिपातस्तु दैवतः ॥ १३० ॥
व्यसने चावपाते च वैजयन्ती गुहे ध्वजे ।
इन्द्रालये, वैजयन्ती त्वग्निमन्थपताकयोः ॥ १३१ ॥
जयन्त्यां च शुभ्रदन्ती पुष्पदन्तगजस्त्रियाम् ।
सुदत्यां च समाघातस्त्वाहवे घातनेऽपि च ॥ १३२ ॥
समाहितः समाधिस्थे संश्रुतेऽथ समुद्धतः ।
अविनीते समुद्गीर्णे समुद्रान्ता दुरालभा ॥ १३३ ॥
कर्पासिका च स्पृक्का च सदागतिः सदीश्वरे ।
निर्वाणे पवमाने च सरस्वती सरिद्भिदि ॥ १३४ ॥
वाच्यापगायां स्त्रीरत्ने गोवाग्देवतयोरपि ।
सूर्यभक्तो बन्धुजीवे भास्करस्य च पूजके ॥ १३५ ॥
सेनापतिर्गुहेऽध्यक्षे हिमारातिः खगेऽनले ।
हैमवत्यद्रिजा स्वर्णक्षीरी शुक्लवचाऽभया ॥ १३६ ॥

इति चतुःस्वरतान्ताः ।

अनीकस्थो रक्षिवर्गे युत्खले वीरमर्दले ।
चिन्हे गजाशिक्षके चेतिकथा व्यर्थभाषणे ॥ १३७ ॥
अश्रद्धेये नष्टधर्मेऽप्युदरथिर्वियन्मणौ ।

१ चुन्द्योः ।

अब्धौ, चित्ररथो विद्याधरे गन्धर्वसूर्ययोः ॥ १३८ ॥
चतुष्पथश्चतुर्मार्गसङ्गमे ब्राह्मणेऽपि च ।
दशमीस्थोऽतिवृद्धे[1] स्यात्क्षीणरागे मृताशने ॥ १३९ ॥
वानप्रस्थो मधूकद्रौ किंशुकाश्रमभेदयोः ।

इति चतुःस्वरथान्ताः ।

अष्टापदश्चन्द्रमाल्यां लूतायां शरभे गिरौ ॥ १४० ॥
कनके शारिफलकेऽभिमर्दो मन्थयुद्धयोः ।
स्यादभिष्यन्द आश्रावनेत्ररोगातिवृद्धिषु ॥ १४१ ॥
अपवादस्तु निर्देशे निन्दाविस्रम्भयोरपि ।
उपनिषत्तु वेदान्ते रहस्यधर्मयोरपि ॥ १४२ ॥
एकपदं तु तत्काले[2] स्यादेकपदी तु वर्त्मनि ।
कटुकन्दः शृङ्गवेरे शोभाञ्जनरसोनयोः ॥ १४३ ॥
कुरुविन्दः पद्मरागे मुकुरव्रीहिभेदयोः ।
कुल्माषे हिङ्गुले मुस्ते कोकनदं तु रक्तयोः ॥ १४४ ॥
अम्भोजन्मकुमुदयोश्चतुष्पदं गवादिषु ।
स्त्रीणां करणभेदे च रक्तपादो(?) मतङ्गजे ॥ १४५ ॥
स्यन्दने च जनपदः स्यात्पुनर्जनदेशयोः ।
परिवादस्तु निन्दायां वीणावादनवस्तुनि ॥ १४६ ॥
प्रियंवदः प्रियवादिनभश्चरविशेषयोः ।
पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्त्या नायकप्रिये ॥ १४७
पुटभेदस्तु नगरातोद्ययोस्तटिनीमुखे ।
महानादो वर्षुकाब्दे[3] महाध्वाने शयानके ॥ १४८ ॥
गजे च मुचुकुन्दस्तु द्रुभेदे मुनिदैत्ययोः ।
मेघनादोऽम्बुदध्वाने वरुणे रावणात्मजे ॥ १४९ ॥
विशारदो बुधे धृष्टे विष्णुपदं नभोऽब्जयोः ।
विष्णुपदस्तु क्षीरोदे विष्णुपदी सुरापगा ॥ १५० ॥

---

१ स्थविरे । २ तदात्वे । ३ वषुकाब्दे ।

सङ्क्रान्तिर्द्वारका चापि शतह्रदा तु विद्युति ।
वज्रेऽपि च समर्यादा मर्यादासहितेऽन्तिके ॥ १५१ ॥

इति चतुःस्वरदान्ताः ।

अनुबन्धोऽप्रयोगे स्याच्छिशौ मुख्यानुयायिनि ।
प्रकृतस्यानुवर्ते च दोषस्यापादनेऽपि च ॥ १५२ ॥
अनुबन्धी तृषा हिक्काऽवरोधस्तु नृपौकसि ।
शुद्धान्ते च तिरोधाने गर्तादौ रोधनेऽपि च १५३ ॥
अवष्टब्धमदूरे स्यात्समाक्रान्तेऽवलम्बिनि ।
अनिरुद्धश्चरे पुष्पायुधसूनावनर्गले ॥ १५४ ॥
आशाबन्धः समाश्वासे मर्कटस्य च जालके ।
इष्टगन्धः सुगन्धि स्यादिष्टगन्धं तु वालुके ॥ १५५ ॥
इक्षुगन्धा काशक्रोष्ट्रीकोकिलाक्षेषु गोक्षुरे ।
उग्रगन्धा वचाक्षेत्रयवान्योश्छिक्किकौषधौ ॥ १५६ ॥
उपलब्धिर्मतौ प्राप्तौ कालस्कन्धस्तु तिन्दुके ।
तमाले जीवकद्रौ च तीक्ष्णगन्धा वचौषधे ॥ १५७ ॥
शोभाञ्जने राजिकायां परिव्याधो द्रुमोत्पले ।
वेतसे, महौषधं तु विषाशुण्ठ्योः रसोनके ॥ १५८ ॥
ब्रह्मबन्धुर्निन्द्यविप्रे ब्राह्मणस्य च बान्धवे ।
समुन्नद्धस्तूर्द्ध्वबद्धे पण्डितंमन्यदृप्तयोः ॥ १५९ ॥

इति चतुःस्वरधान्ताः ।

अपाचीनं विपर्यस्ते पामर्थेऽभिजनः कुले ।
कुलध्वजे जन्मभूम्यामभिमानस्त्वहङ्कृतौ ॥ १६० ॥
हिंसायां प्रणये ज्ञानेऽवलग्नो मध्यलग्नयोः ।
अवदानमतिवृत्ते[1] खण्डने शुद्धकर्मणि ॥ १६१ ॥
अधिष्ठानं प्रभावेऽध्यासने नगरचक्रयोः ।
अनूचानः साङ्गवेदकोविदे विनयान्विते ॥ १६२ ॥
अन्वासनं स्नेहवस्तौ सेवायामनुशोचने ।

१ इतिवृत्ते ।

अग्रजन्माऽग्रजे विप्रेऽन्तेवासी पुनरन्त्यजे ॥ १६३ ॥
शिष्यप्रान्तगयोश्चाप्यायोधनं समरे वधे ।
आराधनं पाकप्राप्त्योः साधने तोषणेऽपि च ॥ १६४ ॥
आच्छादनं तु वासेन संपिधानेऽपवारणे ।
आकालनं परिसंख्याकांक्षयोर्बन्धनेऽपि च ॥ १६५ ॥
आतञ्चनं स्याज्जवेन प्रीणनप्रतिवापयोः ।
आवेशनं भूतावेशे प्रवेशे शिल्पवेश्मनि ॥ १६६ ॥
आस्कन्दनं तिरस्कारे संशोषणसमीकयोः ।
आत्माधीनः सुते प्राणाधारे श्याले विदूषके ॥ १६७ ॥
आत्मयोनिः स्मरे वेधस्युद्वर्तनं विलेपने ।
अपावृत्तावुत्पतने स्यादुपासनमासने ॥ १६८ ॥
शुश्रूषायां शराभ्यासेऽप्युपधानं तु गेन्दुके[1] ।
व्रते विशेषे प्रणये स्यादुत्पतनमुत्प्लुतौ ॥ १६९ ॥
उत्पत्तावुदयनस्तु वत्सराजे घटोद्भवे ।
उत्सादनं समुल्लेखोद्वर्तनोद्वाहनेषु च ॥ १७० ॥
उद्वाहनं द्विसीत्ये स्यादुद्वाहनी वराटके ।
कर्पीतना गर्दभाण्डशिरीषाम्रातपिप्पलाः ॥ १७१ ॥
कलध्वनिः परभृते पारावतकलापिनोः ।
कात्यायनो वररुचौ कात्यायनी तु पार्वती ॥ १७२ ॥
काषायवस्त्रविधवाऽर्द्धवृद्धा महिलाऽपि च ।
कामचारी कलविङ्के स्वेच्छाजारिणि कामुके ॥ १७३ ॥
कारन्धमी धातुवादनिरते कांस्यकारिणि ।
किष्कुपर्वा पोटगले स्यादिक्षुत्वचिसारयोः ॥ १७४ ॥
कुचन्दनं वृक्षभेदे पत्राङ्गे रक्तचन्दने ।
कुम्भयोनिर्द्रोणेऽगस्त्ये कृष्णवर्त्मा विधुन्तुदे ॥ १७५ ॥
दुराचारे हुताशे च गवादनीन्द्रवारुणी ।

---

१ गन्दुके ।

घासस्थानं गवादीनां गदयित्नुः शरासने ॥ १७६ ॥
जलपाके पुष्पचापे च घनाघनो निरन्तरे ।
वासवे घातुके मत्तगजे वर्षुकवारिदे ॥ १७७ ॥
घोषयित्नुः पिके विप्रे चिरजीवी तु वायसे ।
अजे च चित्रभानुस्तु हुताशनदिनेशयोः ॥ १७८ ॥
जलाटनः कङ्कखगे जलाटनी जलौकसि ।
तपोधना तु मुण्डीर्यां तपोधनस्तपस्विनि ॥ १७९ ॥
तपस्विनी पुनर्मांसी कटुरोहिणिकापि च ।
तिक्तपर्वा हिलमोची गुडूची मधुयष्टिका ॥ १८० ॥
देवसेनेन्द्रकन्यायां सैन्ये दिविषदामपि ।
नागाङ्गना नागयष्टौ द्विरदस्य च मुद्गरे ॥ १८१ ॥
निर्यातनं वैरशुद्धौ दाने न्याससमर्पणे ।
निधुवनं रते कम्पे निर्वासनं तु मारणे ॥ १८२ ॥
पुरादेश्च बहिष्कारे निरसनं निषूदने ।
निष्ठीवने निरासे च निशमनं निशामनम् ॥ १८३ ॥
निरीक्षणश्रवणयोर्निर्भर्त्सनमलक्तके ।
खलीकारे, प्रजननं प्रगमे योनिजन्मनोः ॥ १८४ ॥
प्रणिधानमभियोगे समाधानप्रवेशयोः ।
प्रयोजनं कार्यहेत्वोः स्यात् प्रवचनमागमे ॥ १८५ ॥
प्रकृष्टवचने, प्रस्फोटनं शूर्पे प्रकाशने ।
ताडने, प्रतिपन्नस्तु विज्ञातेऽङ्गीकृतेऽपि च ॥ १८६ ॥
प्रतियत्नः संस्कारे स्यादुपग्रहणलिप्सयोः ।
प्रहसनं च प्रहासाक्षेपयोः रूपकान्तरे ॥ १८७ ॥
प्रतिमानं प्रतिबिम्बे गजदन्तद्वयान्तरे ।
प्रसाधनी कङ्कतिकासिद्ध्योः, प्रसाधनं पुनः ॥ १८८ ॥
वेषे, प्रचलाकी सर्पे मयूरेऽथ पयस्विनी ।
विभावर्यां गोधेन्वां च पुण्यजनस्तु सज्जने ॥ १८९ ॥
गुह्यके यातुधाने च पृथग्जनोऽधमे जडे ।

पृष्ठशृङ्गी भीमसेने षण्डसैरिभयोरपि ॥ १९० ॥
महाधनं महामूल्ये सिह्लके चारुवाससि ।
महासेनो महासैन्ये स्कन्देऽप्यथ महामुनिः ॥ १९१ ॥
अगस्तिकुस्तुम्बुरुणोर्मालुधानी लताभिदि ।
मातुधानौ मातुलाहौ मातुलानी पुनः शणे ॥ १९२ ॥
कलापे मातुलपत्न्यां रसायनो विहङ्गमे ।
पक्षीन्द्रे, रसायनं तु जराव्याधिजिदौषधे ॥ १९३ ॥
राजादनः पियालद्रौ क्षीरिकायां त्रिपत्रके ।
रोचमानो दीप्यमाने कण्ठावर्त्ते च वाजिनः ॥ १९४ ॥
वर्द्धमानो वीरजिने स्वस्तिकैरण्डविष्णुषु ।
अश्नभेदे शरावे च विरोचनेऽग्निसूर्ययोः ॥ १९५ ॥
प्रल्हादनन्दने चन्द्रे विहेठनं विडम्बने ।
हिंसायां मर्दने विस्मापना स्यात्कुहके स्मरे ॥ १९६ ॥
गन्धर्वनगरे चापि विष्वक्सेनो जनार्दने ।
विष्वक्सेना तु फलिनी विश्राणनं विहापिते ॥ १९७ ॥
संप्रेषणो परित्यागे विहननं तु पिञ्जने ।
वधेऽथ विश्वकर्मार्के मुनिभिद्देवशिल्पिनोः ॥ १९८ ॥
विघ्नकारी विघातस्य कारके घोरदर्शने ।
विलेपनी स्याद्यवाग्वां चारुवेषस्त्रियामपि ॥ १९९ ॥
वृक्षादनो मधुच्छत्रे चलपत्रकुठारयोः ।
वृक्षादनी तु वन्दायां विदारी गन्धिकौषधे ॥ २०० ॥
वृषपर्वा तु शृङ्गारिहरदैत्यकसेरुषु ।
वैरोचनो रविसुते सुगते बलिदानवे ॥ २०१ ॥
श्वेतधामा घनसारे कलानाथाब्धिफेनयोः ।
श्लेष्मघना तु केतक्यां मल्यामथ समापनम् ॥ २०२ ॥
परिच्छेदे समाधाने समाप्तिवधयोरपि ।
संमूर्छनमभिव्याप्तौ मोहे, सनातनोऽच्युते ॥ २०३ ॥
पितॄणामतिथौ रुद्रवेधसोः शाश्वते स्थिरे ।

सदादानो गन्धगजे हेरम्बेऽभ्रमतङ्गजे ॥ २०४ ॥
संयमनं व्रते बन्धे संयमनी यमस्य पूः ।
समापन्नं समीचीनग्रहणे नित्यकर्मणि ॥ २०५ ॥
समापन्नं वधे क्लिष्टे समाप्तप्राप्तयोरपि ।
संवर्द्धनं च संवादे समालोचे वशीकृतौ ॥ २०६ ॥
समुत्थानं निदानेऽभियोगे, संवाहनं पुनः ।
वाहनेऽङ्गमर्दने च संप्रयोगी तु कामुके ॥ २०७ ॥
कलाकेलौ सुप्रयोगे सरोजिनी सरोरुहे ।
सरोरुहिण्यां कासारे स्तनयित्नुः पयोमुचि ॥ २०८ ॥
मृत्यौ स्तनिते रोगे च सारसनमुरश्छदे ।
काञ्च्यां च सामयोनिस्तु सामोत्थे द्रुहिणे गजे ॥२०९॥
सामिधेनी समिदृचोः सुधांमुनो जनार्दने ।
प्रासादे वत्सराजेऽद्रिभेदे वाऽथ सुदर्शनम् ॥ २१० ॥
विष्णोश्चक्रे, सुदर्शन्यमरवत्यां, सुदर्शना ।
आज्ञायामौषधीभेदे मरुजन्ध्वां(?)पुरीभिदि ॥ २११ ॥
सौदामिनी तडिद्भेदतडितोरप्सरोभिदि ।
हर्षयित्नुः सुते स्वर्णे-

इति चतुःस्वरनान्ताः ।

अवलेपो गर्वलेपयोः ॥ २१२ ॥
दूषणेऽप्यपलापस्तु प्रेमापन्हवयोरपि ।
उपतापो गदे तापे जलकूप्यन्धुगर्भके ॥ २१३ ॥
सरस्यां, जीवपुष्पं तु दमनके फणिज्जके ।
नागपुष्पस्तु पुन्नागे चम्पके नागकेसरे ॥ २१४ ॥
परिवापो जलस्थाने पर्युप्तिपरिवारयोः ।
परिकम्पो भये कम्पे प्राप्तरूपोऽज्ञरम्ययोः ॥ २१५ ॥
पिण्डपुष्पं जवायां स्यादशोके सरसीरुहे ।
बहुरूपः स्मरे विष्णौ सरटे धूणके शिवे ॥ २१६ ॥

१ संवननं । २ सुयामुन । ३ सुरीभिदि ।

मेघपुष्पं तु नादेये पिण्डाभ्रे सलिलेऽपि च ।
विप्रलापो विरुद्धोक्तावनर्थकवचस्यपि ॥ २१७ ॥
वृकधूपो वृक्षधूपे सिह्लकेऽथ वृषाकपिः ।
वासुदेवे शिवेऽग्नौ च हेमपुष्पं तु चम्पके ॥ २१८ ॥
अशोकद्रौ जपापुष्पे-

इति चतुःस्वरपान्ताः ।

राजजम्बूस्तु जम्बुभित् ।
पिण्डखर्जूरवृक्षश्चाऽपि-

इति चतुःस्वरबान्ताः ।

अवष्टम्भस्तु काञ्चने ॥ २१९ ॥
सरम्भारम्भयोः स्तम्भे शातकुम्भोऽश्वमारके ।
शातकुम्भं तु कनके-

इति चतुःस्वरभान्ताः ।

अभ्यागमः समरेऽन्तिके ॥ २२० ॥
घाते रोधेऽभ्युपगमेऽनुपमस्तु मनोरमे ।
अनुपमा सुप्रतीकस्त्रियामुपगमः पुनः ॥ २२१ ॥
अङ्गीकारेऽन्तिकगतावुपक्रमस्तु विक्रमे ।
उपधायां तदाद्याचिख्यासाचिकित्सयोरपि ॥ २२२ ॥
आरम्भेऽथ जलगुल्मो जलावर्तेऽम्बुचत्वरे ।
कमठे, दण्डयामस्तु दिवसे कुम्भजे यमे ॥ २२३ ॥
१प्लवङ्गमः कपौ भेके पराक्रमस्तु विक्रमे ।
सामर्थ्ये चाऽभियोगे च महापद्मः पुनर्निधौ ॥ २२४ ॥
नागसंख्याभिदोर्यातयामो भुक्तसमुज्झिते ।
जीर्णे च सार्वभौमस्तु दिग्गजे चक्रवर्तिनि ॥ २२५ ॥

इति चतुःस्वरमान्ताः ।

अनुशयः पश्चात्तापे दीर्घद्वेषानुबन्धयोः ।
अन्वाहार्यममावास्याश्राद्धमिष्टेश्च दक्षिणा ॥ २२६ ॥

---

१ प्लवगमः ।

अवसायोपयुक्तान्ये(?) समाप्तौ निश्चयेऽपि च ।
अवश्यायो हिमे दर्पेऽप्यपसव्यं तु दक्षिणे ॥ २२७ ॥
प्रतिकूलेऽन्तशय्या भूशय्या पितृवनं मृतिः ।
उपकार्या राजगेहमुपकारोचितापि च ॥ २२८ ॥
चन्द्रोदयौ शश्युदयोल्लोचौ चन्द्रोदयौषधौ ।
जलाशयमुशीरे स्याज्जलाशयो जलाश्रये ॥ २२९ ॥
तण्डुलीयः शाकभेदे विडङ्गतरुताप्ययोः ।
तृणशून्यं मल्लिकायां केतकीशाखिनः फले ॥ २३० ॥
धनञ्जयो नागभेदे ककुभे देहमारुते ।
पार्थेऽग्नौ, निरामयस्तु स्यादिडिक्के गतामये ॥ २३१ ॥
प्रतिभयं भये भीष्मे प्रतिश्रयः सभौकसोः ।
परिधायः परिकरे जलस्थाननितम्बयोः ॥ २३२ ॥
पाञ्चजन्यः पोटगले शङ्खे दामोदरस्य च ।
पौरुषेयं पुरुषेण कृतेऽप्यवहिते वधे ॥ २३३ ॥
समूहे च विकारे च फलोदयो द्युलाभयोः ।
बिलेशयो मूषिकेऽहौ भागधेयः पुनः करे ॥ २३४ ॥
दायादे, भागधेयं तु भाग्ये, महालयः पुनः ।
तीर्थे विहारपरमात्मनो,र्महोदयं पुरे ॥ २३५ ॥
महोदयः स्वाम्यमुक्त्योर्महामूल्यं महार्घके ।
पद्मरागमणौ, मार्जालीयः शूद्रबिडालयोः ॥ २३६ ॥
शरीरशोधने, रौहिणेयो वत्से बुधे बले ।
वैनतेयस्तु गरुडे स्याच्चण्डांशोश्च सारथौ ॥ २३७ ॥
समुच्छ्रयो वैरोन्नत्योः समुदायो गणे रणे ।
समुदयस्तुद्गमेऽपि सम्परायस्तु संयुगे ॥ २३८ ॥
आपद्युत्तरकाले च स्यात्समाह्वय आहवे ।
पशुभिः पक्षिभिर्द्यूते स्थूलोच्चयो वरण्डके ॥ २३९ ॥
गजानां मध्यमगते गण्डाश्माकात्स्न्र्ययोरपि ।

हिरण्मयो लोकधातौ सौवर्णे-

इति चतुःस्वरयान्ताः।

अभिमरो वधे ॥ २४० ॥

स्वबलात्साध्वसे युद्धेऽवसरो वत्सरे क्षणे।
अरुष्करं व्रणकरे भल्लातकफलेऽपि च ॥ २४१ ॥
अश्वतरो नागभेदे वेसरेऽनुत्तरः पुनः।
निरुत्तरे च श्रेष्ठे चाऽवस्करो गूथगुह्ययोः ॥ २४२ ॥
अभिहारः संनहने चौरिकोद्यमयोरपि।
अवहारस्तु युद्धादिविश्रान्तौ ग्राहचौरयोः ॥ २४३ ॥
निमन्त्रणोपनेतव्येऽलङ्कारः कङ्कणादिषु।
उपमादावकूपारः कूर्मराजसमुद्रयोः ॥ २४४ ॥
अवतारस्तु नद्यादितीर्थेऽवतरणेऽपि च।
अग्निहोत्रोऽनल हव्यंऽसिपत्त्रो नरकान्तरे ॥ २४५ ॥
कोशकारेऽर्धचन्द्रस्तु गलहस्तेन्दुखण्डयोः।
चन्द्रके बाणभेदे चाऽर्धचन्द्रा त्रिवृताभिदि ॥ २४६ ॥
आत्मवीरो बलवति श्यालपुत्रे विदूषके।
आडम्बरः क्षमारम्भे बृंहिते तूर्यनिस्वने ॥ २४७ ॥
इन्दीवरं नीलोत्पलमिन्दीवरी[1] शतावरी।
उपकारस्तूपकृतौ विकीर्णकुसुमादिषु ॥ २४८ ॥
उपचारस्तु लञ्चायां व्यवहारोपचर्ययोः।
उदुम्बरः कुष्ठभेदे देहल्यां षण्डके तरौ ॥ २४९ ॥
उदुम्बरं ताम्र, उपह्वरं रहसि सन्निधौ।
उद्दन्तुरः कराले स्यादुत्तुङ्गोत्कटदन्तयोः ॥ २५० ॥
औदुम्बरो यमे रोगे[2]भेदे, कर्मकरोऽन्तके।
भृतिजीविनि भृत्ये च कर्मकरी तु बिम्बिका ॥ २५१ ॥
मूर्वा च कर्णिकारस्तु कृतमाले द्रुमोत्पले।
करवीरो हयमारे कृपाणे दैत्यभिद्यपि ॥ २५२ ॥

---

१ इन्दीवरा। २ राग।

